# देवीनारायणीयम्

# अनुक्रमणिका

1 प्रथमदशकः - देवीमहिमा

यस्मिन्निदं यत इदं यदिदं यदस्मात्

उत्तीर्णरूपमभिपश्यति यत्समस्तम् ।

नो दृश्यते च वचसां मनसश्च दूरे

यद्भाति चादिमहसे प्रणमामि तस्मै ॥ 1-1॥

न स्त्री पुमान् न सुरदैत्यनरादयो न

क्लीबं न भूतमपि कर्मगुणादयश्च ।

भूमंस्त्वमेव सदनाद्यविकार्यनन्तं

सर्वं त्वया जगदिदं विततं विभाति ॥ 1-2॥

रूपं न तेऽपि बहुरूपभृदात्तशक्ति-

र्नाट्यं तनोषि नटवत्खलु विश्वरङ्गे ।

वर्षाणि ते सरसनाट्यकलाविलीना
भक्ता अहो सहृदया क्षणवन्नयन्ति ॥ 1-3॥

रूपानुसारि खलु नाम ततो बुधैस्त्वं
देवीति देव इति चासि निगद्यमाना ।
देव्यां त्वयीर्यस उमा कमलाऽथ वाग् वा
देवे तु षण्मुख उमापतिरच्युतो वा ॥ 1-4॥

त्वं ब्रह्म शक्तिरपि धातृरमेशरुद्रैः
ब्रह्माण्डसर्गपरिपालनसंहतीश्च ।
राज्ञीव कारयसि सुभ्रु निजाज्ञयैव
भक्तेष्वनन्यशरणेषु कृपावती च ॥ 1-5॥

माता करोति तनयस्य कृते शुभानि
कर्माणि तस्य पतने भृशमेति दुःखम् ।
वृद्धौ सुखं च तव कर्म न नापि दुःखं
त्वं ह्येव कर्मफलदा जगतां विधात्री ॥ 1-6॥

सर्वत्र वर्षसि दयामत एव वृष्ट्या
सिक्तः सुबीज इव वृद्धिमुपैति भक्तः ।

दुर्बीजवद्व्रजति नाशमभक्त एव

त्वं निर्घृणा न विषमा न च लोकमातः ॥ 1-7॥

सर्वोपरीश्वरि विभाति सुधासमुद्र-

स्तन्मध्यतः परिवृते विविधैः सुदुर्गैः ।

छत्रायिते त्रिजगतां भवती मणिद्वी-

पाख्ये शिवे निजपदे हसिताननाऽऽस्ते ॥ 1-8॥

यस्ते पुमानभिदधाति महत्त्वमुच्चै-

र्यो नाम गायति शृणोति च ते विलज्जः ।

यश्चातनोति भृशमात्मनिवेदनं ते

स स्वान्यघानि विधुनोति यथा तमोऽर्कः ॥ 1-9॥

त्वां निर्गुणां च सगुणां च पुमान् विरक्तो

जानाति किञ्चिदपि नो विषयेषु सक्तः ।

ज्ञेया भव त्वमिह मे भवतापहन्त्रीं

भक्तिं ददस्व वरदे परिपाहि मां त्वम् ॥ 1-10॥

## 2 द्वितीयदशकः - हयग्रीवकथा

रणेषु दैत्येषु हतेषु देवाः पुरा प्रहृष्टाः सहदातृशर्वाः ।
यियक्षवो यज्ञपतिं विनीताः प्रपेदिरे विष्णुमनन्तवीर्यम् ॥ 2-1॥

दृष्ट्वा च निद्रावशगं प्रभुं तमधिज्यचापाग्रसमर्पितास्यम् ।
आश्चर्यमापुर्विबुधा न कोऽपि प्राबोधयत्तं खलु पापभीत्या ॥ 2-2॥

हरेस्तदानीमजसृष्टवम्र्या मुखार्पणाकुञ्चितचापमौर्वी ।
भग्ना धनुश्चार्जवमाप सद्यस्तेनाभवत्सोऽपि निकृत्तकण्ठः ॥ 2-3॥

कायाच्छिरस्तूत्पतितं मुरारेः पश्यत्सु देवेषु पपात सिन्धौ ।
चेतः सुराणां कदने निमग्नं हाहेति शब्दः सुमहानभूच्च ॥ 2-4॥

किमत्र कृत्यं पतिते हरौ नः कुर्मः कथं वेति मिथो ब्रुवाणान् ।
देवान् विधाताऽऽह भवेन्न कार्यमकारणं दैवमहो बलीयः ॥ 2-5॥

ध्यायेत देवीं करुणार्द्रचित्तां ब्रह्माण्डसृष्ट्यादिकहेतुभूताम् ।
सर्वाणि कार्याणि विधास्यते नः सा सर्वशक्ता सगुणाऽगुणा च ॥ 2-6॥

इत्यूचुषः प्रेरणया विधातुस्त्वामेव वेदा नुनुवुः सुराश्च ।
दिवि स्थिता देवगणांस्त्वमात्थ भद्रं भवेद्वो हरिणेदृशेन ॥ 2-7॥

दैत्यो हयग्रीव इति प्रसिद्धो मयैव दत्तेन वरेण वीरः ।
वेदान् मुनींश्चापि हयास्यमात्रवध्यो भृशं पीडयति प्रभावात् ॥ 2-8॥

दैवेन कृत्तं हरिशीर्षमद्य संयोज्यतां वाजिशिरोऽस्य काये ।
ततो हयग्रीवतया मुरारिर्दैत्यं हयग्रीवमरं निहन्ता ॥ 2-9॥

त्वमेवमुक्त्वा सदयं तिरोधास्त्वष्ट्रा कबन्धेऽश्वशिरो मुरारेः ।
संयोजितं पश्यति देवसङ्घे हयाननःश्रीहरिरुत्थितोऽभूत् ॥ 2-10॥

दैत्यं हयग्रीवमहन् हयास्यो रणे मुरारिस्त्वदनुग्रहेण ।
सदा जगन्मङ्गलदे त्वदीयाः पतन्तु मे मूर्ध्नि कृपाकटाक्षाः ॥ 2-11॥

3 तृतीयदशकः - महाकाल्यवतारः

जगत्सु सर्वेषु पुरा विलीनेष्वेकार्णवे शेषतनौ प्रसुप्ते ।
हरौ सुरारी मधुकैटभाख्यौ महाबलावप्सु विजह्रतुर्द्वौ ॥ 3-1॥

समाः सहस्रं यतचित्तवृत्ती वाग्बीजमन्त्रं वरदे जपन्तौ ।
प्रसादिताया असुरौ भवत्याः स्वच्छन्दमृत्युत्वमवापतुस्तौ ॥ 3-2॥

एकाम्बुधौ तौ तरलोर्मिमाले निमज्जनोन्मज्जनकेलिलोलौ ।
यदृच्छया वीक्षितमब्जयोनिं रणोत्सुकावूचतुरिद्धगर्वौ ॥ 3-3॥

पद्मासनं वीरवरोपभोग्यं न भीरुभोग्यं न वराकभोग्यम् ।
मुञ्चेदमद्यैव न यासि चेत्त्वं प्रदर्शय स्वं युधि शौर्यवत्त्वम् ॥ 3-4॥

इदं समाकर्ण्य भयाद्विरिञ्चः सुषुप्तिनिष्पन्दममोघशक्तिम् ।
प्रबोधनार्थं हरिमिद्धभक्त्या तुष्टाव नैवाचलदम्बुजाक्षः ॥ 3-5॥

अस्पन्दता त्वस्य कयापि शक्त्या कृतेति मत्वा मतिमान् विरिञ्चः ।
प्रबोधयैनं हरिमेवमुक्त्वा स्तोत्रैर्विचित्रैर्भवतीमनौषीत् ॥ 3-6॥

नुतिप्रसन्नाऽब्जभवस्य तूर्णं निःसृत्य विष्णोः सकलाङ्गतस्त्वम् ।
दिवि स्थिता तत्क्षणमेव देवो निद्राविमुक्तो हरिरुत्थितोऽभूत् ॥ 3-7॥

अथैष भीतं मधुकैटभाभ्यां विरिञ्चमालोक्य हरिर्जगाद ।
अलं भयेनाहमिमौ सुरारी हन्तास्मि शीघ्रं समरेऽत्र पश्य ॥ 3-8॥

एवं हरौ वक्तरि तत्र दैत्यौ रणोत्सुकौ प्रापतुरिद्धगर्वौ ।

तयोरविज्ञाय बलं मुरारिर्युद्धोद्यतोऽभूदजरक्षणार्थम् ॥ 3-9॥

बिभेमि रागादिमहारिपुभ्यो जेतुं यतिष्येऽहमिमान् सुशक्तान् ।
तदर्थशक्तिं मम देहि नित्यं निद्रालसो मा च भवानि मातः ॥ 3-10॥

4 चतुर्थदशकः - मधुकैटभवधः

त्वं तामसी सुप्तरमाधवाङ्गजा श्यामा रुचा मोहनताम्रलोचना ।
एकार्णवे घोररणोत्सुकान् हरिं दैत्यौ च तौ स्मेरमुखी समैक्षथाः ॥ 4-1॥

पश्यत्यजे बाहुरणं मुरारिणा कृत्वा मधुः श्रान्तिमवाप सत्वरम् ।
अभ्येत्य युद्धं कुरुते स्म कैटभः श्रान्ते च तस्मिन्नकृताहवं मधुः ॥ 4-2॥

एवं मुहुः सङ्गरविश्रमावुभौ पर्यायतो वर्षसहस्रपञ्चकम् ।
ग्लानिं विना चक्रतुरच्युतः क्लमाद्विश्रान्तिमिच्छन्नसुरौ जगाद तौ ॥ 4-3॥

श्रान्तेन भीतेन च बालकेन च प्रभुः पुमान्नैव करोति संयुगम् ।
मध्येरणं द्वौ कृतविश्रमौ युवामेकः करोम्येव निरन्तराहवम् ॥ 4-4॥

ज्ञात्वा हरिं श्रान्तमुभौ विदूरतः सन्तस्थतुर्विश्रमसौख्यवांस्ततः ।

त्वामेव तुष्टाव कृपातरङ्गिणीं सर्वेश्वरीं दैत्यजयाय माधवः ॥ 4-5॥

देवि प्रसीदैष रणे जितोऽस्म्यहं दैत्यद्वयेनाब्जभवं जिघांसुना ।
सर्वं कटाक्षैस्तव साध्यमत्र मां रक्षेति वक्तारमभाषथा हरिम् ॥ 4-6॥

युद्धं कुरु त्वं जहि तौ मया भृशं सम्मोहितौ वक्रदृशेत्ययं त्वया ।
सञ्चोदितो हृष्टमना महार्णवे तस्थौ रणायाययतुश्च दानवौ ॥ 4-7॥

भूयोऽपि कुर्वन् रणमच्युतो हसन् कामातुरौ ते मुखपद्मदर्शनात् ।
तावाह तुष्टोऽस्म्यतुलौ रणे युवां ददाम्यहं वां वरमेष वाञ्छितम् ॥ 4-8॥

तावूचतुर्विद्धि हरे न याचकावावां ददावस्तव वाञ्छितं वरम् ।
नासत्यवाचौ स्व इतीरितो हरिस्त्वां संस्मरन् शत्रुजिगीषयाऽब्रवीत् ॥ 4-9॥

मह्यं वरं यच्छतमद्य मे यतो वध्यौ युवां स्यातमितीरितावुभौ ।
दृष्ट्वाऽप्सु लीनं सकलं समूचतुस्त्वं सत्यवाङ्नौ जहि निर्जले स्थले ॥ 4-10॥

अस्त्वेवमित्यादृतवाङ्गदा हरिः स्वोरौ पृथावुन्नमिते जलोपरि ।
कृत्वाऽरिणा तच्छिरसी तदाऽच्छिनत्स्वच्छन्दमृत्यू तव मायया हतौ ॥ 4-11॥

द्वेषश्च रागश्च सदा ममाम्बिके दैत्यौ हृदि स्तोऽत्र विवेकमाधवः ।
आभ्यां करोत्येव रणं जयत्वयं तुभ्यं महाकालि नमः प्रसीद मे ॥ 4-12॥

5 पञ्चमदशकः - सुद्युम्नकथा

जाता सुतेला मनुसप्तमस्य सम्प्रार्थितोऽनेन मुनिर्वसिष्ठः ।
शम्भोः कटाक्षेण सुतां कुमारं चक्रे स कालेन बभूव राजा ॥ 5-1॥

सुद्युम्ननामा मृगयाविहारी गतो हयारूढ इलावृतं सः ।
स्त्रीत्वं पुनःप्राप्य सुतं हिमांशोर्वव्रे पतिं पुत्रमसूत चैषा ॥ 5-2॥

न्यवेदयत्सा गुरवे वसिष्ठायैषा कदाचिन्निजपुंस्त्वकामम् ।
तत्साधनार्थं हरमेव दध्यौ मुनिः प्रसन्नस्तमुवाच शम्भुः ॥ 5-3॥

इलावृतं मा पुरुषः प्रयातु प्रयाति चेत्सोऽस्त्वबला तदैव ।
एवं मया निश्चितमेव सौम्य गौर्याः प्रसादाय भवान् प्रियो मे ॥ 5-4॥

न पक्षभेदोऽत्र ममास्ति गौरी भवांश्च तृप्तौ भवतां मदीयौ ।
इतः परं तस्य मनोरपत्यं मासं पुमान् स्याद्वनिता च मासम् ॥ 5-5॥

एवं शिवोक्तेन मनोरपत्यं लब्ध्वा च पुंस्त्वं धरणीं शशास ।
स्त्रीत्वे च हर्म्येषु निनाय कालं जनो न चैनं नृपमभ्यनन्दत् ॥ 5-6॥

पुरूरवस्यात्मसुतेऽर्पयित्वा राज्यं विरक्तो वनमेत्य भूपः ।
श्रीनारदाल्लब्धनवार्णमन्त्रो भक्त्या स दध्यौ भवतारिणीं त्वाम् ॥ 5-7॥

सिंहाधिरूढामरुणाब्जनेत्रां त्वां सुप्रसन्नामभिवीक्ष्य नत्वा ।
स्तुत्वा च भक्त्या स्थिरपुंस्त्वमेष लेभेऽथ सायुज्यमवाप चान्ते ॥ 5-8॥

शौर्यं न वीर्यं न च पौरुषं मे नैवास्ति च स्त्रीसहजा तितिक्षा ।
मूढो न जानाम्यशुभं शुभं च देयं त्वया मे शुभमेव मातः ॥ 5-9॥

पश्यानि मातः प्रवरान्गुरूंस्ते कारुण्यतो मां सुपथा नयन्तु ।
सत्सङ्गसम्भावितचित्तवृत्तिर्भवानि ते देवि नमः प्रसीद ॥ 5-10॥

## 6 षष्ठदशकः - व्यासनारदसमागमः

त्वदिच्छया देवि पुलस्त्यवाचा पराशराद्विष्णुपुराणकर्तुः ।
मुनेर्हरिर्लोकहिताय दीपाद्यथा प्रदीपोऽजनि कृष्णनामा ॥ 6-1॥

वेदं चतुर्धा व्यदधत्स कृष्णद्वैपायनो व्यास इति प्रसिद्धः ।

वेदान्तसूत्राणि पुराणजालं महेतिहासं च महांश्चकार ॥ 6-2॥

तपः प्रवृत्तः कलविङ्कपोतं मात्रा स संलालितमाश्रमान्ते ।

पश्यन्नधन्यामनपत्यतां स्वां सपुत्रभाग्यातिशयं च दध्यौ ॥ 6-3॥

सत्पुत्रलाभाय तपश्चिकीर्षुस्तीव्रं महामेरुसमीपमेत्य ।

आराधनीयः क इति क्षणं स चिन्ताऽऽतुरो लोकगुरुः स्थितोऽभूत् ॥ 6-4॥

श्रीनारदस्तत्र समागतस्त्वत्कृपाकटाक्षाङ्कुरवन्महर्षिः ।

अर्घ्यादिसम्पूजित आसनस्थो व्यासेन पृष्टः प्रहसन्निवाह ॥ 6-5॥

किं चिन्तया कृष्ण भजस्व देवीं कृपावती वाञ्छितदानदक्षा ।

अहेतुरेषा खलु सर्वहेतुर्निरस्तसाम्यातिशया निरीहा ॥ 6-6॥

सैषा महाशक्तिरिति प्रसिद्धा यदाज्ञया ब्रह्मरमेशरुद्राः ।

ब्रह्माण्डसर्गस्थितिसंहृतीश्च कुर्वन्ति काले न च ते स्वतन्त्राः ॥ 6-7॥

यस्याश्च ते शक्तिभिरेव सर्वकर्माणि कुर्वन्ति सुरासुराद्याः ।

मर्त्या मृगाः कृष्ण पतत्रिणश्च शक्तेर्विधेयाः क इहाविधेयः ॥ 6-8॥

प्रत्यक्षमुख्यैर्न च सा प्रमाणैर्ज्ञेया तपोभिः कठिनैर्व्रतैश्च ।
न वेदशास्त्राध्ययनेन चापि भक्त्यैव जानाति पुमान् महेशीम् ॥ 6-9॥

तामेव भक्त्या सततं भजस्व सर्वार्थदां कृष्ण तवास्तु भद्रम् ।
इत्यूचुषि ब्रह्मसुते गते स व्यासस्तपोऽर्थं गिरिमारुरोह ॥ 6-10॥

इहास्मि पर्याकुलचित्तवृत्तिर्गुरुं न पश्यामि महत्तमं च ।
सन्मार्गतो मां नय विश्वमातः प्रसीद मे त्वां शरणं व्रजामि ॥ 6-11॥

7 सप्तमदशकः - शुकोत्पत्तिः

कृष्णस्य तस्यारणितः शुकाख्यस्तव प्रसादादजनिष्ट पुत्रः ।
हृष्टो मुनिर्मङ्गलकर्म चक्रे तत्रादितेया ववृषुः सुमानि ॥ 7-1॥

केचिज्जगुः केचन वाद्यघोषं चक्रुश्च नाके ननृतुः स्त्रियश्च ।
वायुर्ववौ स्पर्शसुखः सुगन्धः शुकोद्भवे सर्वजनाः प्रहृष्टाः ॥ 7-2॥

बालः स सद्यो ववृधे सुचेताः बृहस्पतेरात्तसमस्तविद्यः ।
दत्वा विनीतो गुरुदक्षिणां च प्रत्यागतो हर्षयति स्म तातम् ॥ 7-3॥

युवानमेकान्ततपःप्रवृत्तं व्यासः कदाचिच्छुकमेवमूचे ।
वेदांश्च शास्त्राणि च वेत्सि पुत्र कृत्वा विवाहं भव सद्गृहस्थः ॥ 7-4॥

सर्वाश्रमाणां कवयो विशिष्टा गृहाश्रमं श्रेष्ठतरं वदन्ति ।
तमाश्रितस्तिष्ठति लोक एष यजस्व देवान् विधिवत्पितॄंश्च ॥ 7-5॥

तवास्तु सत्पुत्र ऋणादहं च मुच्येय मां त्वं सुखिनं कुरुष्व ।
पुत्रः सुखायात्र परत्र च स्यात्त्वां पुत्र तीव्रैरलभे तपोभिः ॥ 7-6॥

किञ्च प्रमाथीनि सदेन्द्रियाणि हरन्ति चित्तं प्रसभं नरस्य ।
पश्यन् पिता मे जननीं तपस्वी पराशरोऽपि स्मरमोहितोऽभूत् ॥ 7-7॥

य आश्रमादाश्रममेति तत्तत्कर्माणि कुर्वन् स सुखी सदा स्यात् ।
गृहाश्रमो नैव च बन्धहेतुस्त्वया च धीमन् क्रियतां विवाहः ॥ 7-8॥

एवं ब्रुवाणोऽपि शुकं विवाहाद्यसक्तमाज्ञाय पितेव रागी ।
पुराणकर्त्ता च जगद्गुरुः स मायानिमग्नोऽश्रुविलोचनोऽभूत् ॥ 7-9॥

भोगेषु मे निस्पृहताऽस्तु मातः प्रलोभितो मा करवाणि पापम् ।

मा बाधतां मां तव देवि माया मायाधिनाथे सततं नमस्ते ॥ 7-10॥

8 अष्टमदशकः - परमज्ञानोपदेशः

अथाह कृष्णः शृणु चिन्तयाऽलं गृहाश्रमस्ते न च बन्धकृत्स्यात् ।
बन्धस्य मुक्तेश्च मनो हि हेतुर्मनोजयार्थं भज विश्वधात्रीम् ॥ 8-1॥

यस्याः प्रसादे सफलं समस्तं यदप्रसादे विफलं समस्तम् ।
माहात्म्यमस्या विदितं जगत्सु मया कृतं भागवतं शृणु त्वम् ॥ 8-2॥

विष्णुर्जगत्येकसमुद्रलीने बालः शयानो वटपत्र एकः ।
स्वबालताहेतुविचारमग्नः शुश्राव कामप्यशरीरिवाचम् ॥ 8-3॥

सनातनं सत्यमहं मदन्यत्सत्यं न च स्यादहमेव सर्वम् ।
श्रुत्वेदमुन्मीलितदृष्टिरेष स्मितानना त्वां जननीं ददर्श ॥ 8-4॥

चतुर्भुजा शङ्खगदारिपद्मधरा कृपाद्यैः सह शक्तिजालैः ।
स्थिता जलोपर्यमलाम्बरा त्वं प्रहृष्टचित्तं हरिमेवमात्थ ॥ 8-5॥

किं विस्मयेनाच्युत विस्मृताऽहं त्वया पराशक्तिमहाप्रभावात् ।

सा निर्गुणा वाङ्मनसोरगम्या मां सात्विकीं शक्तिमवेहि लक्ष्मीम् ॥ 8-6॥

श्रुतस्त्वया यस्त्वशरीरिशब्दो हिताय ते देव तया स उक्तः ।
अयं हि सर्वश्रुतिशास्त्रसारो मा विस्मरेमं हृदि रक्षणीयम् ॥ 8-7॥

नातः परं ज्ञेयमवेहि किञ्चित्प्रियोऽसि देव्याः शृणु मे वचस्त्वम् ।
त्वन्नाभिपद्माद्द्रुहिणो भवेत्स कर्ता जगत्पालय तत्समस्तम् ॥ 8-8॥

भ्रूमध्यतः पद्मभवस्य कोपाद्रुद्रो भविष्यन् सकलं हरेच्च ।
देवीं सदा संस्मर तेऽस्तु भद्रमेवं निगद्याशु तिरोदधाथ ॥ 8-9॥

हरेरिदं ज्ञानमजस्य लब्धमजात्सुरर्षेश्च ततो ममापि ।
मया त्विदं विस्तरतः सुतोक्तं यत्सूरयो भागवतं वदन्ति ॥ 8-10॥

देव्या महत्त्वं खलु वर्ण्यतेऽत्र यद्भक्तिमाप्तस्य गृहे न बन्धः ।
यद्भक्तिहीनस्त्वगृहेऽपि बद्धो राजाऽपि मुक्तो जनको गृहस्थः ॥ 8-11॥

विदेहराजं तमवाप्य पृष्ट्वा स्वधर्मशङ्काः परिहृत्य धीरः ।
फलेष्वसक्तः कुरु कर्म तेन कर्मक्षयः स्यात्तव भद्रमस्तु ॥ 8-12॥

श्रुत्वेति सद्यः शुक आश्रमात्स प्रस्थाय वैदेहपुरं समेत्य ।

प्रत्युद्गतः सर्वजनैर्नृपाय न्यवेदयत्स्वागमनस्य हेतुम् ॥ 8-13॥

गृहस्थधर्मस्य महत्त्वमस्माद्विज्ञाय धीमान् स शुको निवृत्तः ।

पित्राश्रमं प्राप्य सुतां पितॄणां व्यासेऽतिहृष्टे गृहिणीं चकार ॥ 8-14॥

उत्पाद्य पुत्रांश्चतुरः सुतां च गृहस्थधर्मान् विधिनाऽऽचरन् सः ।

प्रदाय चैनां मुनयेऽणुहाय बभूव काले कृतसर्वकृत्यः ॥ 8-15॥

हित्वाऽऽश्रमं तातमपीशशैलशृङ्गे तपस्वी सहसोत्पतन् खे ।

बभौ स भास्वानिव तद्वियोगखिन्नं शिवो व्यासमसान्त्वयच्च ॥ 8-16॥

सर्वत्र शङ्काकुलमेव चित्तं ममेह विक्षिप्तमधीरमार्तम् ।

कर्तव्यमूढोऽस्मि सदा शिवे मां धीरं कुरु त्वं वरदे नमस्ते ॥ 8-17॥

## 9 नवमदशकः - भुवनेश्वरीदर्शनः

एकार्णवेऽस्मिन् जगति प्रलीने दैत्यौ हरिर्ब्रह्मवधोद्यतौ तौ ।

जघान देवि त्वदनुग्रहेण त्वदिच्छयैवागमदत्र रुद्रः ॥ 9-1॥

एको विमानस्तरसाऽऽगतः खात्त्रिमूर्त्यविज्ञातगतिस्त्वदीयः ।
त्वत्प्रेरिता आरुरुहुस्तमेते स चोत्पतन् व्योम्नि चचार शीघ्रम् ॥ 9-2॥

वैमानिकाश्चोद्गतयः सशक्रं दिवं सपद्मोद्भवसत्यलोकम् ।
सरुद्रकैलासममी सविष्णुवैकुण्ठमप्युत्पुलका अपश्यन् ॥ 9-3॥

अदृष्टपूर्वानितरांस्त्रिमूर्तीन् स्थानानि तेषामपि दृष्टवन्तः ।
त्रिमूर्तयस्ते च विमोहमापुः प्राप्तो विमानश्च सुधासमुद्रम् ॥ 9-4॥

त्वद्भ्रूलतालोलतरङ्गमालं त्वदीयमन्दस्मितचारुफेनम् ।
त्वन्मञ्जुमञ्जीरमृदुस्वनाढ्यं त्वत्पादयुग्मोपमसौख्यदं च ॥ 9-5॥

तन्मध्यतस्ते ददृशुर्विचित्रप्राकारनानाद्रुलतापरीतम् ।
स्थानं मणिद्वीपमदृष्टपूर्वं क्रमाच्छिवे त्वां च सखीसमेताम् ॥ 9-6॥

ज्ञात्वा द्रुतं त्वां हरिराह दातस्त्रिनेत्र धन्या वयमद्य नूनम् ।
सुधासमुद्रोऽयमनल्पपुण्यैः प्राप्या जगन्मातृनिवासभूमिः ॥ 9-7॥

सा दृश्यते रागिजनैरदृश्या मञ्चे निषण्णा बहुशक्तियुक्ता ।
एषैव दृक् सर्वमिदं च दृश्यमहेतुरेषा खलु सर्वहेतुः ॥ 9-8॥

बालः शयानो वटपत्र एक एकार्णवेऽपश्यमिमां स्मितास्याम् ।
ययैव मात्रा परिलालितोऽहमेनां समस्तार्तिहरां व्रजेम ॥ 9-9॥

रुध्यामहे द्वारि यदि स्तुवामस्तत्र स्थिता एव वयं महेशीम् ।
इत्यच्युतेनाभिहिते विमानस्त्वद्गोपुरद्वारमवाप देवि ॥ 9-10॥

आयाम्यहं चित्तनिरोधरूपविमानतस्ते पदमद्वितीयम् ।
न केनचिद्रुद्धगतो भवानि त्वामेव मातः शरणं व्रजामि ॥ 9-11॥

## 10 दशमदशकः - शक्तिप्रदानम्

ततो विमानादजविष्णुरुद्रास्त्वद्गोपुरद्वार्यवरुह्य सद्यः ।
स्त्रियः कृता देवि तवेच्छयैव सविस्मयास्त्वन्निकटं समीयुः ॥ 10-1॥

कृतप्रणामास्तव पादयुग्मनखेषु विश्वं प्रतिबिम्बितं ते ।
विलोक्य साश्चर्यममोघवाग्भिः पृथक्पृथक् तुष्टुवुरम्बिके त्वाम् ॥ 10-2॥

नुतिप्रसन्ना निजसर्गशक्तिं महासरस्वत्यभिधामजाय ।
रक्षार्थशक्तिं हरये महालक्ष्म्याख्यां च लीलानिरते ददाथ ॥ 10-3॥

गौरीं महाकाल्यभिधां च दत्वा संहारशक्तिं गिरिशाय मातः ।
नवाक्षरं मन्त्रमुदीरयन्ती बद्धाञ्जलींस्तान् स्मितपूर्वमात्थ ॥ 10-4॥

ब्रह्मन् हरे रुद्र मदीयशक्तित्रयेण दत्तेन सुखं भवन्तः ।
ब्रह्माण्डसर्गस्थितिसंहृतीश्च कुर्वन्तु मे शासनया विनीताः ॥ 10-5॥

मान्या भवद्भिः खलु शक्तयो मे स्याच्छक्तिहीनं सकलं विनिन्द्यम् ।
स्मरेत मां सन्ततमेवमुक्त्वा प्रस्थापयामासिथ तांस्त्रिमूर्तीन् ॥ 10-6॥

नत्वा त्रयस्ते भवतीं निवृत्ताः पुंस्त्वं गता आरुरुहुर्विमानम् ।
सद्यस्तिरोधाः स सुधासमुद्रो द्वीपो विमानश्च तिरोबभूवुः ॥ 10-7॥

एकार्णवे पङ्कजसन्निधौ च हतासुरे ते खलु तस्थिवांसः ।
दृष्टं नु सत्यं किमु बुद्धिमोहः स्वप्नो नु किं वेति च न व्यजानन् ॥ 10-8॥

ततस्त्रयस्ते खलु सत्यलोकवैकुण्ठकैलासकृताधिवासाः ।
ब्रह्माण्डसृष्ट्यादिषु दत्तचित्तास्त्वां सर्वशक्तामभजन्त देवि ॥ 10-9॥

सुधासमुद्रं तरलोर्मिमालं स्थानं मणिद्वीपमनोपमं ते ।

मञ्चे निषण्णां भवतीं च चित्ते पश्यानि ते देवि नमः प्रसीद ॥ 10-10॥

11 एकादशदशकः - ब्रह्मनारदसंवादः

श्रीनारदः पद्मजमेकदाऽऽह पितस्त्वया सृष्टमिदं जगत्किम् ।
किं विष्णुना वा गिरिशेन वा किमकर्तृकं वा सकलेश्वरः कः ॥ 11-1॥

इतीरितोऽजः सुतमाह साधु पृष्टं त्वया नारद मां शृणु त्वम् ।
विभाति देवी खलु सर्वशक्तिस्वरूपिणी सा भुवनस्य हेतुः ॥ 11-2॥

एकं परं ब्रह्म सदद्वितीयमात्मेति वेदान्तवचोभिरुक्ता ।
न सा पुमान् स्त्री च न निर्गुणा सा स्त्रीत्वं च पुंस्त्वं च गुणैर्दधाति ॥ 11-3॥

सर्वं तदावास्यमिदं जगत्सा जाता न सर्वं तत एव जातम् ।
तत्रैव सर्वं च भवेत्प्रलीनं सैवाखिलं नास्ति च किञ्चनान्यत् ॥ 11-4॥

गौणानि चान्तःकरणेन्द्रियाणि सा निर्गुणाऽवाङ्मतिगोचरा च ।
सा स्तोत्रमन्त्रैः सगुणा महद्भिः संस्तूयते भक्तविपन्निहन्त्री ॥ 11-5॥

सुधासमुद्रे वसतीयमार्या द्वीपे विचित्राद्भुतशक्तियुक्ता ।

सर्वं जगद्यद्वशगं वयं च त्रिमूर्तयो नाम यदाश्रिताः स्मः ॥ 11-6॥

तद्दत्तशक्तित्रयमात्रभाजस्त्रिमूर्तयः पुत्र वयं विनीताः ।
तदाज्ञया साधु सदाऽपि कुर्मो ब्रह्माण्डसर्गस्थितिसंहृतीश्च ॥ 11-7॥

दैवेन मूढं कविमातनोति सा दुर्बलं तु प्रबलं करोति ।
पङ्गुं गिरिं लङ्घयते च मूकं कृपावती चाऽतनुते सुवाचम् ॥ 11-8॥

यत्किञ्चिदज्ञायि मया महत्त्वं देव्यास्तदुक्तं तव सङ्ग्रहेण ।
सर्वत्र तद्वर्णय विस्तरेण विधत्स्व भक्तिं हृदये जनानाम् ॥ 11-9॥

इतीरितोऽजेन मुनिः प्रसन्नस्तव प्रभावं करुणार्द्रचित्ते ।
व्यासं तथाऽन्यांश्च यथोचितं स प्रबोधयामस पवित्रवाग्भिः ॥ 11-10॥

न मे गुरुस्त्वच्चरितस्य वक्ता न मे मतिस्त्वत्स्मरणैकसक्ता ।
अवाच्यवक्ताऽहमकार्यकर्ता नमामि मातश्चरणाम्बुजं ते ॥ 11-11॥

## 12 द्वादशदशकः - उतथ्यजननम्

पुरा द्विजः कश्चन देवदत्तो नाम प्रजार्थं तमसासमीपे ।

कुर्वन् मखं गोभिलशापवाचा लेभे सुतं मूढमनन्तदुःखः ॥ 12-1॥

उतथ्यनामा ववृधे स बालो मूढस्तु दृष्टं न ददर्श किञ्चित् ।
श्रुतं न शुश्राव जगाद नैव पृष्टो न च स्नानजपादि चक्रे ॥ 12-2॥

इतस्ततोऽटन् समवाप्तगङ्गो जले निमज्जन् प्रपिबंस्तदेव ।
वसन् मुनीनामुटजेषु वेदमन्त्रांश्च शृण्वन् स दिनानि निन्ये ॥ 12-3॥

क्रमेण सत्सङ्गविवृद्धसत्त्वः सत्यव्रतः सत्यतपाश्च भूत्वा ।
नासत्यवाक् त्वत्कृपया स मूढोऽप्युन्मीलितान्तर्नयनो बभूव ॥ 12-4॥

कुलं पवित्रं जननी विशुद्धा पिता च सत्कर्मरतः सदा मे ।
मया कृतं नैव निषिद्धकर्म तथाऽपि मूढोऽस्मि जनैश्च निन्द्यः ॥ 12-5॥

जन्मान्तरे किं नु कृतं मयाऽघं किं वा न विद्याऽर्थिजनस्य दत्ता ।
ग्रन्थोऽप्यदत्तः किमु पूज्यपूजा कृता न किं वा विधिवन्न जाने ॥ 12-6॥

नाकारणं कार्यमितीर्यते हि दैवं बलिष्ठं दुरतिक्रमं च ।
ततोऽत्र मूढो विफलीकृतोऽस्मि वन्ध्यद्रुवन्निर्जलमेघवच्च ॥ 12-7॥

इत्यादि सञ्चिन्त्य वने स्थितः स कदाचिदेकं रुधिराप्लुताङ्गम् ।
बीभत्सरूपं किटिमेष पश्यन्नय्यय्य इत्युत्स्वनमुच्चचार ॥ 12-8॥

शरेण विद्धः स किरिर्भयार्तः प्रवेपमानो मुनिवासदेशे ।
अन्तर्निकुञ्जस्य गतश्च दैवाददृश्यतामाप भयार्तिहन्त्रि ॥ 12-9॥

विना मकारं च विना च भक्तिमुच्चार्य वाग्बीजमनुं पवित्रम् ।
प्रसन्नबुद्धिः कृपया तवैष बभूव दूरीकृतसर्वपापः ॥ 12-10॥

नाहं कविर्गानविचक्षणो न नटो न शिल्पादिषु न प्रवीणः ।
पश्यात्र मां मूढमनन्यबन्धुं प्रसन्नबुद्धिं कुरु मां नमस्ते ॥ 12-11॥

13 त्रयोदशदशकः - उतथ्यमहिमा

अथागतः कश्चिदधिज्यधन्वा मुनिं निषादः सहसा जगाद ।
त्वं सत्यवाग्ब्रूहि मुने त्वया किं दृष्टः किटिः सायकविद्धदेहः ॥ 13-1॥

दृष्टस्त्वया चेद्वद सूकरः क्व गतो न वाऽदृश्यत किं मुनीन्द्र ।
अहं निषादः खलु वन्यवृत्तिर्ममास्ति दारादिकपोष्यवर्गः ॥ 13-2॥

श्रुत्वा निषादस्य वचो मुनिः स तूष्णीं स्थितश्चिन्तयति स्म गाढम् ।
वदामि किं दृष्ट इतीर्यते चेद्धन्यादयं तं मम चाप्यघं स्यात् ॥ 13-3॥

सत्यं नरं रक्षति रक्षितं चेदसत्यवक्ता नरकं व्रजेच्च ।
सत्यं हि सत्यं सदयं न किञ्चित्सत्यं कृपाशून्यमिदं मतं मे ॥ 13-4॥

एवं मुनेश्चिन्तयतः स्वकार्यव्यग्रो निषादः पुनरेवमूचे ।
दृष्टस्त्वया किं स किटिर्न किं वा दृष्टः स शीघ्रं कथयात्र सत्यम् ॥ 13-5॥

मुनिस्तमाहात्र पुनःपुनःकिं निषाद मां पृच्छसि मोहमग्नः ।
पश्यन् न भाषेत न च ब्रुवाणः पश्येदलं वाग्भिरवेहि सत्यम् ॥ 13-6॥

उन्मादिनो जल्पनमेतदेवं मत्वा निषादः सहसा जगाम ।
न सत्यमुक्तं मुनिना न कोलो हतश्च सर्वं तव देवि लीलाः ॥ 13-7॥

द्रष्टा परं ब्रह्म तदेव च स्यादिति श्रुतिः प्राह न भाषते सः ।
सदा ब्रुवाणस्तु न पश्यतीदमयं हि सत्यव्रतवाक्यसारः ॥ 13-8॥

भूयः स सारस्वतबीजमन्त्रं चिरं जपन् ज्ञाननिधिः कविश्च ।
वाल्मीकिवत्सर्वदिशि प्रसिद्धो बभूव बन्धून् समतर्पयच्च ॥ 13-9॥

स्मृता नता देवि सुपूजिता वा श्रुता नुता वा खलु वन्दिता वा ।
ददासि नित्यं हितमाश्रितेभ्यः कृपार्द्रचित्ते सततं नमस्ते ॥ 13-10॥

## 14 चतुर्दशदशकः - सुदर्शनकथा - भरद्वाजाश्रमप्रवेशम्

राजा पुराऽऽसीत्किल कोसलेषु धर्मैकनिष्ठो ध्रुवसन्धिनामा ।
आस्तां प्रिये अस्य मनोरमा च लीलावती चेति दृढानुरक्ते ॥ 14-1॥

मनोरमाऽसूत सुदर्शनाख्यं कुमारकं शत्रुजितं च साऽन्या ।
संवर्धयंस्तौ मृगयाविहारी वने नृपो हा हरिणा हतोऽभूत् ॥ 14-2॥

विचिन्तयन् राजकुलस्य वृत्तं तज्ज्येष्ठपुत्रस्य सुदर्शनस्य ।
राज्याभिषेकाय गुरुर्वसिष्ठश्चकार मन्त्रं सचिवैः समेतः ॥ 14-3॥

मातामहः शत्रुजितो युधाजिदभ्येत्य सद्योऽमितवीर्यशाली ।
राज्ये स्वदौहित्रमिहाभिषिक्तं कर्तुं कुबुद्धिः कुरुते स्म यत्नम् ॥ 14-4॥

मनोरमाया अपि वीरसेनःपिताऽभ्युपेत्याशु रुरोध तस्य ।
यत्नं बली स्वस्वसुतासुताभिषेकैकबुद्धी खलु तावभूताम् ॥ 14-5॥

कृत्वा विवादं च ततो नृपौ द्वौ घोरं रणं चक्रतुरिद्धरोषौ।
युधाजिता तत्र तु वीरसेनो दैवाद्धतोऽभूद्धरिणा करीव॥ 14-6॥

राज्येऽभिषिक्तः खलु शत्रुजित्स बालस्ततोऽयं रिपुभिद्युधाजित्।
दौहित्रराज्यं सुखमेकनाथः शशास वज्रीव दिवं महेशि॥ 14-7॥

पत्युः पितुश्चापि मृतेरनाथा भीता विदल्लाभिधमन्त्रियुक्ता।
मनोरमा बालसुता त्वरण्ये ययौ भरद्वाजमुनिं शरण्यम्॥ 14-8॥

तपोनिधिर्दीनजनानुकम्पी ज्ञात्वा मुनिस्तां ध्रुवसन्धिपत्नीम्।
उवाच- वत्से वस निर्भयैव तपोवनेऽत्रास्तु शुभं तवेति॥ 14-9॥

अल्पोऽप्युपेक्ष्यो न रिपुर्न रोगोऽप्येवं स्मरन्नाशु नृपो युधाजित्।
तां हर्तुकामः ससुतां महर्षेः प्रापाश्रमं मन्त्रिवरेण साकम्॥ 14-10॥

न मानितस्तेन तपस्विना स मनोरमां नैव सुतं च लेभे।
प्रहर्तुकामोऽपि मुनिं स मन्त्रिवाचा निवृत्तः श्रुतकौशिकोऽभूत्॥ 14-11॥

एवं मुनिस्तां ससुतां ररक्ष भीतोऽस्मि संसारयुधाजितोऽहम्।

न मे सहायोऽस्ति विना त्वयैष सनूपुरं ते चरणं नमामि ॥ 14-12॥

15 पञ्चदशदशकः - सुदर्शनकथा - देवीदर्शनम्

एवं तवैव कृपया मुनिवर्यशीतच्छायाश्रितो हतभयः स सुदर्शनोऽयम् ।
वेदध्वनिश्रवणपूतहृदाश्रमान्ते सम्मोदयन् मुनिजनान् ववृधे कुमारः ॥ 15-1॥

आबाल्यमेष मुनिबालकसङ्गमेन क्लीं क्लीमितीश्वरि सदा तव बीजमन्त्रम् ।
तत्रोच्चचार कृपयाऽस्य पुरः कदाचिदाविर्बभूविथ नतं तमभाषथाश्च ॥ 15-2॥

प्रीताऽस्मि ते सुत जगज्जननीमवेहि मां सर्वकामवरदां तव भद्रमस्तु ।
चन्द्राननां शशिकलां विमलां सुबाहोः काशीश्वरस्य तनयां विधिनोद्वह त्वम् ॥ 15-3॥

नष्टा भवेयुरचिरेण तवारिवर्गा राज्यं च यैरपहृतं पुनरेष्यसि त्वम् ।
मातृद्वयेन सचिवैश्च समं स्वधर्मान् कुर्याः सदेति समुदीर्य तिरोदधाथ ॥ 15-4॥

स्वप्ने त्वया शशिकला कथिताऽस्ति भारद्वाजाश्रमे प्रथितकोसलवंशजातः ।
धीमान् सुदर्शन इति ध्रुवसन्धिपुत्र एनं पतिं वृणु तवास्तु शुभं सदेति ॥ 15-5॥

स्वप्नानुभूतमनृतं किमृतं न वेति सुप्तोत्थिता तु मतिमत्यपि न व्यजानात् ।
पृष्टात्सुदर्शनकथां सुमुखी द्विजात्सा श्रुत्वाऽनुरक्तहृदयैव बभूव देवि ॥ 15-6॥

ज्ञात्वा सुबाहुरिदमाकुलमानसस्तामस्मान्निवर्त्तयितुमाशु सहेष्टपत्न्या ।
कृत्वा प्रयत्नमखिलं विफलं च पश्यन्निच्छास्वयंवरविधिं हितमेव मेने ॥ 15-7॥

कश्चित्कदाचन सुदर्शनमेत्य विप्रः प्राहागतः शशिकलावचसाऽहमत्र ।
सा त्वां ब्रवीति- नृपपुत्र जगज्जनन्या वाचा वृतोऽसि पतिरस्मि तवैव दासी ॥ 15-8॥

अत्रागता नृपतयो बहवस्त्वमेत्य तेषां सुधीर मिषतां नय मां प्रियां ते ।
एवं वधूवचनमानय तां सुशीलां भद्रं तवास्त्विवदमुदीर्य जगाम विप्रः ॥ 15-9॥

स्वप्ने च जाग्रति च पश्यति भक्तवर्यस्त्वां सन्ततं तव वचो मधुरं शृणोति ।
ऐश्वर्यमाशु लभतेऽपि च मुक्तिमेति त्वद्भक्तिमेव मम देहि नमो जनन्यै ॥ 15-10॥

## 16 षोडशदशकः - सुदर्शनविवाहम्

श्रुत्वा वधूवाक्यमरं कुमारो हृष्टो भरद्वाजमुनिं प्रणम्य ।
आपृच्छय मात्रा सह देवि स त्वां स्मरन् रथेनाप पुरं सुबाहोः ॥ 16-1॥

स्वयंवराहूतमहीभुजां स सभां प्रविष्टो हतभीर्निषण्णः ।

कन्या कला पूर्णशशी त्वसावित्याहुर्जनास्तामभिवीक्षमाणाः ॥ 16-2॥

वधूश्च तद्दर्शनवर्धितानुरागा स्मरन्ती तव वाक्यसारम् ।

सभां नृपाणामजितेन्द्रियाणां न प्राविशत्सा पितृचोदिताऽपि ॥ 16-3॥

शङ्काकुलास्ते नृवरा बभूवुरुच्चैर्युधाजित्कुपितो जगाद- ।

मा दीयतां लोकहितानभिज्ञा वधूरशक्ताय सुदर्शनाय ॥ 16-4॥

बालोऽयमित्येष मयाऽऽश्रमे प्रागुपेक्षितः सोऽत्र रिपुत्वमेति ।

माऽयं च वध्वा व्रियतां वृतश्चेद्धन्यामिमं तां च हरेयमाशु ॥ 16-5॥

श्रुत्वा युधाजिद्वचनं नृपाला हितैषिणः केचिदुपेत्य सर्वम् ।

सुदर्शनं प्रोचुरथापि धीरः स निर्भयो नैव चचाल देवि ॥ 16-6॥

एकत्र पुत्री च सुदर्शनश्च युधाजिदन्यत्र बली सकोपः ।

तन्मध्यगो मङ्क्षु नृपः सुबाहुर्बद्धाञ्जलिः प्राह नृपान् विनम्रः ॥ 16-7॥

नृपा वचो मे शृणुतेह बाला नायाति पुत्री मम मण्डपेऽत्र ।

तत्क्षम्यतां श्वोऽत्र नयाम्यहं तां याताद्य वो विश्रममन्दिराणि ॥ 16-8॥

गतेषु सर्वेषु सुदर्शनस्तु त्वां संस्मरन् मातृहितानुसारी ।
सुबाहुना तन्निशि तेन दत्तां वधूं यथाविध्युदुवाह देवि ॥ 16-9॥

प्रातर्युधाजित्प्रबलो विवाहवार्तां निशम्यात्तरुषा ससैन्यः ।
सुदर्शनं मातृवधूसमेतं यात्रोन्मुखं भीमरवो रुरोध ॥ 16-10॥

ततो रणे घोरतरे सुबाहुः क्लीं क्लीमितीशानि समुच्चचार ।
तत्राविरासीः समराङ्गणे त्वं सिंहाधिरूढा स्वजनार्तिहन्त्री ॥ 16-11॥

त्वन्नाम गायन् कथयन् गुणांस्ते त्वां पूजयंश्चात्र नयामि कालम् ।
स्वप्नेऽपि दृष्टा न मया त्वमम्बे कृपां कुरु त्वं मयि ते नमोऽस्तु ॥ 16-12॥

## 17 सप्तदशदशकः - सुदर्शनकोसलप्राप्तिः

युधाजितं शत्रुजितं च हत्वा रणाङ्गणस्था नुतिभिः प्रसन्ना ।
सुबाहुमुख्याननुगृह्य भक्तान् सर्वेषु पश्यत्सु तिरोदधाथ ॥ 17-1॥

पृष्टो नृपान् प्राह सुदर्शनस्तान् दृष्टा भवद्भिः खलु सर्वशक्ता ।
या निर्गुणा योगिभिरप्यदृश्या दृश्या च भक्तैः सगुणा विनीतैः ॥ 17-2॥

या राजसीदं सृजतीव शक्तिर्या सात्विकी पालयतीव विश्वम् ।
या तामसी संहरतीव सर्वं सद्वस्तु सैवान्यदसत्समस्तम् ॥ 17-3॥

भक्तार्तिहन्त्री करुणामयी सा भक्तद्रुहां भीतिकरी प्रकामम् ।
वसन् भरद्वाजतपोवनान्ते चिराय मात्रा सह तां भजेऽहम् ॥ 17-4॥

तामेव भक्त्या भजतेह भुक्तिमुक्तिप्रदामस्तु शुभं सदा वः ।
श्रुत्वेदमानम्रमुखास्तथेति सम्मन्त्र्य भूपाश्च ततो निवृत्ताः ॥ 17-5॥

सुदर्शनो मातृवधूसमेतः सुबाहुमापृछ्य रथाधिरूढः ।
पुरीमयोध्यां प्रविशन् पुरेव सीतापतिस्तोषयति स्म सर्वान् ॥ 17-6॥

लीलावतीं प्राप्य विमातरं च नत्वा विषण्णां हतपुत्रताताम् ।
सदुक्तिभिः कर्मगतीः प्रबोध्य स सान्त्वयामास महेशि भक्तः ॥ 17-7॥

जनेषु पश्यत्सु सुदर्शनोऽत्र त्वां पूजयित्वा गुरुणाऽभिषिक्तः ।
राज्ये त्वदीयं गृहमाशु कृत्वा पूजाविधानादि च संवृधत्त ॥ 17-8॥

तस्मिन् नृपे त्वत्सदनानि कृत्वा जन्नाः प्रतिग्रामममपूजयंस्त्वाम् ।

काश्यां सुबाहुश्च तथाऽकरोत्ते सर्वत्र पेतुः करुणाकटाक्षाः ॥ 17-9॥

न कर्मणा न प्रजया धनेन न योगसाङ्ख्यादिविचिन्तया च ।
न च व्रतेनापि सुखानुभूतिर्भक्त्यैव मर्त्यः सुखमेति मातः ॥ 17-10॥

नाहं सुबाहुश्च सुदर्शनश्च न मे भरद्वाजमुनिः शरण्यः ।
गुरुः सुहृद्बन्धुरपि त्वमेव महेश्वरि त्वां सततं नमामि ॥ 17-11॥

## 18 अष्टादशदशकः - रामकथा

सूर्यान्वये दाशरथी रमेशो रामाभिधोऽभूद्भरतोऽथ जातः ।
ज्येष्टानुवर्त्ती खलु लक्ष्मणश्च शत्रुघ्ननामाऽपि जगद्विधात्रि ॥ 18-1॥

विमातृवाक्योज्झितराज्यभोगो रामः ससीतः सहलक्ष्मणश्च ।
चरन् जटावल्कलवानरण्ये गोदावरीतीरमवाप देवि ॥ 18-2॥

तं वञ्चयन् रावण एत्य मायी जहार सीतां यतिरूपधारी ।
रामस्य पत्नीविरहातुरस्य श्रुत्वा विलापं वनमप्यरोदीत् ॥ 18-3॥

श्रीनारदोऽभ्येत्य जगाद रामं किं रोदिषि प्राकृतमर्त्यतुल्यः ।

त्वं रावणं हन्तुमिहावतीर्णो हरिः कथं विस्मरसीदमार्य ॥ 18-4॥

कृते युगे वेदवतीति कन्या हरिं श्रुतिज्ञा पतिमाप्तुमैच्छत् ।
सा पुष्करद्वीपगता तदर्थमेकाकिनी तीव्रतपश्चकार ॥ 18-5॥

श्रुता तयाऽभूदशरीरिवाक् ते हरिः पतिर्भाविनि जन्मनि स्यात् ।
निशम्य तद्धृष्टमनास्तथैव कृत्वा तपस्तत्र निनाय कालम् ॥ 18-6॥

तां रावणः कामशरार्दितः संश्चकर्ष सा च स्तवनेन देवीम् ।
प्रसाद्य कोपारुणलोचनाभ्यां निरीक्ष्य तं निश्चलमाततान ॥ 18-7॥

शशाप तं च त्वमरे मदर्थे सबान्धवो राक्षस नङ्क्ष्यसीति ।
स्वं कौणपस्पृष्टमशुद्धदेहं योगेन सद्यो विजहौ सती सा ॥ 18-8॥

जाता पुनःसा मिथिलेशकन्या काले हरिं त्वां पतिमाप दैवात् ।
स हन्यतां सत्वरमाशरेन्द्रस्तन्नाशकालस्तु समागतश्च ॥ 18-9॥

तदर्थमाराधय लोकनाथां नवाहयज्ञेन कृतोपवासः ।
प्रसाद्य तामेव सुरा नराश्च कामान् लभन्ते शुभमेव ते स्यात् ॥ 18-10॥

इत्यूचिवांसं मुनिमेव राम आचार्यमाकल्प्य सलक्ष्मणस्त्वाम् ।
सम्पूज्य सुस्मेरमुखीं व्रतान्ते सिंहाधिरूढां च पुरो ददर्श ॥ 18-11॥

भक्त्या नतं तं द्रुतमात्थ राम हरिस्त्वमंशेन मदाज्ञयैव ।
जातो नरत्वेन दशास्यहत्यै ददामि तच्छक्तिमहं तवेह ॥ 18-12॥

श्रुत्वा तवोक्तिं स हनूमदाद्यैः साकं कपीन्द्रैः कृतसेतुबन्धः ।
लङ्कां प्रविष्टो हतरावणाद्यः पुरीमयोध्यामगमत्ससीतः ॥ 18-13॥

हा देवि भक्तिर्न हि मे गुरुश्च न चैव वस्तुग्रहणे पटुत्वम् ।
सत्सङ्गतिश्चापि न ते पतन्तु कृपाकटाक्षा मयि ते नमोऽस्तु ॥ 18-14॥

19 एकोनविंशदशकः - भूम्याः दुःखम् 1

पुरा धरा दुर्जनभारदीना समं सुरभ्या विबुधैश्च देवि ।
विधिं समेत्य स्वदशामुवाच स चानयत्क्षीरपयोनिधिं तान् ॥ 19-1॥

स्तुतो हरिः पद्मभवेन सर्वं ज्ञात्वाऽखिलान् साञ्जलिबद्धमाह ।
ब्रह्मन् सुरा नैव वयं स्वतन्त्रा दैवं बलीयः किमहं करोमि ॥ 19-2॥

दैवेन नीतः खलु मत्स्यकूर्मकोलादिजन्मान्यवशोऽहमाप्तः ।
नृसिंहभावादतिभीकरत्वं हयाननत्वात्परिहास्यतां च ॥ 19-3॥

जातः पुनर्दाशरथिश्च दुःखाद्दुःखं गतोऽहं विपिनान्तचारी ।
राज्यं च नष्टं दयिता हृता मे पिता मृतो हा प्लवगाः सहायाः ॥ 19-4॥

कृत्वा रणं भीममरिं निहत्य पत्नीं च राज्यं च पुनर्गृहीत्वा ।
दुष्टापवादेन पतिव्रतां तां विहाय हा दुर्यशसाऽभिषिक्तः ॥ 19-5॥

यदि स्वतन्त्रोऽस्मि ममैवमार्तिर्न स्याद्वयं कर्मकलापबद्धाः ।
सदाऽपि मायवशगास्ततोऽत्र मायाधिनाथां शरणं व्रजामः ॥ 19-6॥

इतीरितैर्भक्तिविनम्रशीर्षैर्निमीलिताक्षैर्विबुधैः स्मृता त्वम् ।
प्रभातसन्ध्येव जपासुमाङ्गी तमोनिहन्त्री च पुरः स्थिताऽऽत्थ ॥ 19-7॥

जाने दशां वो वसुदेवपुत्रो भूत्वा हरिर्दुष्टजनान् निहन्ता ।
तदर्थशक्तीरहमस्य दद्यामंशेन जायेय च नन्दपुत्री ॥ 19-8॥

यूयं च साहाय्यममुष्य कर्तुमंशेन देवा दयितासमेताः ।
जायेध्वमुर्व्यां जगतोऽस्तु भद्रमेवं विनिर्दिश्य तिरोदधाथ ॥ 19-9॥

विचित्रदुष्टासुरभावभारनिपीडितं मे हृदयं महेशि ।
अत्रावतीर्येदमपाकुरु त्वं माता हि मे ते वरदे नमोऽस्तु ॥ 19-10॥

20 विंशदशकः - देवकीपुत्रवधं

अथोरुपुण्ये मथुरापुरे तु विभूषिते मौक्तिकमालिकाभिः ।
श्रीदेवकीशौरिविवाहरङ्गे सर्वैः श्रुतं व्योमवचः स्फुटार्थम् ॥ 20-1॥

अवेहि भो देवकनन्दनायाः सुतोऽष्टमः कंस तवान्तकः स्यात् ।
श्रुत्वेति तां हन्तुमसिं दधानःकंसो निरुद्धो वसुदेवमुख्यैः ॥ 20-2॥

अथाह शौरिः शृणु कंस पुत्रान् ददामि तेऽस्याः शपथं करोमि ।
एतद्वचो मे व्यभिचर्यते चेन्मत्पूर्वजाता नरके पतन्तु ॥ 20-3॥

श्रद्धाय शौरेर्वचनं प्रशान्तस्तां देवकीं भोजपतिर्मुमोच ।
सर्वे च तुष्टा यदवो नगर्यां तौ दम्पती चोषतुरात्तमोदम् ॥ 20-4॥

काले सती पुत्रमसूत तातः कंसाय निश्शङ्कमदात्सुतं स्वम् ।
हन्ता न मेऽयं शिशुरित्युदीर्य तं प्रत्यदाद्भोजपतिश्च तस्मै ॥ 20-5॥

अथाशु भूभारविनाशनाख्यत्वन्नाटकप्रेक्षणकौतुकेन ।

श्रीनारदः सर्वविदेत्य कंसमदृश्यहासं सकलं जगाद ॥ 20-6॥

त्वं भूप दैत्यः खलु कालनेमिर्जगत्प्रसिद्धो हरिणा हतश्च ।

ततोऽत्र जातोऽसि सुरा हरिश्च त्वां हन्तुमिच्छन्त्यधुनाऽपि शत्रुम् ॥ 20-7॥

देवास्तदर्थं नररूपिणोऽत्र व्रजे च जाता वसुदेवमुख्याः ।

नन्दादयश्च त्रिदशा इमे न विस्रम्भणीया न च बान्धवास्ते ॥ 20-8॥

त्वं व्योमवाणीं स्मर देवकस्य पुत्र्याः सुतेष्वष्टमतां गतः सन् ।

स त्वां निहन्ता हरिरेव शत्रुरल्पोऽपि नोपेक्ष्य इतीर्यते हि ॥ 20-9॥

सर्वात्मजानां नृप मेलनेऽस्याः सर्वेऽष्टमाः स्युः प्रथमे च सर्वे ।

मायाविनं विद्धि हरिं सदेति गते मुनौ क्रोधमियाय कंसः ॥ 20-10॥

स देवकीसूनुमरं जघान कारागृहे तां पतिमप्यबध्नात् ।

तयोः सुतान् षट् खलु जातमात्रान् हत्वा कृतं स्वं हितमेव मेने ॥ 20-11॥

कायेन वाचा मनसेन्द्रियैर्वा मा जातु पापं करवाणि देवि ।

ममास्तु सत्कर्मरतिः प्रियस्ते भवानि भक्तं कुरु मां नमस्ते ॥ 20-12॥

21 एकविंशदशकः - नन्दसुतावतारः

सर्वेऽपि जीवा निजकर्मबद्धा एते षडासन्द्रुहिणस्य पौत्राः ।
तन्निन्दया दैत्यकुले प्रजाताः पुनश्च शप्ता जनकेन दैवात् ॥ 21-1॥

तेनैव ते शौरिसुतत्वमाप्ता हताश्च कंसेन तु जातमात्राः ।
श्रीनारदेनर्षिवरेण देवि ज्ञातं पुरावृत्तमिदं समस्तम् ॥ 21-2॥
प्राग्दम्पती चादितिकश्यपौ हा स्वकर्मदोषेण पुनश्च जातौ ।
तौ देवकीशूरसुतौ स्वपुत्रनाशादिभिर्दुःखमवापतुश्च ॥ 21-3॥

त्वं देवकीसप्तमगर्भतो वै गृह्णन्त्यनन्तांशशिशुं स्वशक्त्या ।
निवेश्य रोहिण्युदरे धरण्यां मर्त्यो भवेत्यच्युतमादिशश्च ॥ 21-4॥

प्राक्कर्मदोषात्स सुहृन्मघोनःक्रुद्धेन शप्तो भृगुणा मुरारिः ।
दयार्हसंसारिदशामवाप्स्यन् हा देवकीगर्भमथाविवेश ॥ 21-5॥

पूर्णे तु गर्भे हरिरर्द्धरात्रे कारागृहे देवकनन्दनायाः ।
जज्ञे सुतेष्वष्टमतामवाप्तः शौरिर्विमुक्तो निगडैश्च बन्धात् ॥ 21-6॥

व्योमोत्थवाक्येन तवैव बालं गृह्णन्नदृष्टः खलु गेहपालैः ।
निद्रां गतैस्त्वद्विवृतेन शौरिर्द्वारेण यातो बहिरात्ततोषम् ॥ 21-7॥

त्वं स्वेच्छया गोपकुले यशोदानन्दात्मजा स्वापितजीवजाले ।
अजायथा भक्तजनार्तिहन्त्री सर्वं नियन्त्री सकलार्थदात्री ॥ 21-8॥

तव प्रभावाद्वसुदेव एको गच्छन्नभीतो यमुनामयत्नम् ।
तीर्त्वा नदीं गोकुलमाप तत्र दास्याः करे स्वं तनयं ददौ च ॥ 21-9॥

तयैव दत्तामथ बालिकां त्वामादाय शीघ्रं स ततो निवृत्तः ।
कारागृहं प्राप्य ददौ प्रियायै स चाभवत्पूर्ववदेव बद्धः ॥ 21-10॥

त्वद्रोदनोत्थापितगेहपालैर्निवेदितो भोजपतिः समेत्य ।
त्वां पादयुग्मग्रहणेन कुर्वन्नधःशिरस्कां निरगाद्गृहान्तात् ॥ 21-11॥

स पोथयामास शिलातले त्वां सद्यः समुत्पत्य करादमुष्य ।
दिवि स्थिता शङ्खगदादिहस्ता सुरैः स्तुता स्मेरमुखी त्वमात्थ ॥ 21-12॥

वधेन किं मे तव कंस जातस्तवान्तकः क्वाप्यविदूरदेशे ।

मा द्रुह्यतां साधुजनो हितं स्वं विचिन्तयेत्युक्तवती तिरोऽभूः ॥ 21-13॥

स भोजराट् स्वान्तकनाशनाय सर्वान् शिशून् हन्तुमरं बलिष्ठान् ।
वत्साघमुख्यानसुरान्नियुज्य कृतार्थमात्मानममन्यतोच्चैः ॥ 21-14॥

कंसोऽस्ति मे चेतसि कामलोभक्रोधादिमन्त्रिप्रवरैः समेतः ।
सद्भावहन्ता खलु नन्दपुत्रि तं नाशय त्वच्चरणं नमामि ॥ 21-15॥

22 द्वाविंशदशकः - कृष्णकथा

श्रियःपतिर्गोमलमूत्रगन्धित्न्यस्तप्रभो गोपकुले विषण्णः ।
कृष्णाभिधो वत्सबकादिभीतो रुदन् सदा देवी निनाय बाल्यम् ॥ 22-1॥

हैयङ्गवीनं मथितं पयश्च गोपीर्विलज्जः सततं ययाचे ।
स चाम्बया गोरसचौर्यचुञ्चुरुलूखले पाशवरेण बद्धः ॥ 22-2॥

वनेषु भीमातपशुष्कगात्रो गाश्चारयन् कण्टकविद्धपादः ।
वन्याम्बुपायी फलमूलभक्षी दिने दिने ग्लानिमवाप कृष्णः ॥ 22-3॥

दैवेन मुक्तः स च गोपदास्यादक्रूरनीतो मथुरां प्रविष्टः ।

कंसं निहत्यापि हताभिलाषस्तत्रोग्रसेनस्य बभूव दासः ॥ 22-4॥

दृष्ट्वा जरासन्धचमूं भयेन स बन्धुमित्रो मथुरां विहाय ।
धावन् कथञ्चिद्बहुदुर्गमार्तः स द्वारकाद्वीपपुरं विवेश ॥ 22-5॥

स रुक्मिणीं जाम्बवतीं च भामां कन्यास्तथा द्व्यष्टसहस्रमन्याः ।
समुद्वहन् सस्मितनर्मलापः क्रीडामृगोऽभूत्सततं वधूनाम् ॥ 22-6॥

स दस्युवृत्तिस्त्रिदिवाज्जहार भामानियुक्तः सुरपारिजातम् ।
सत्या च तं गोवृषवत्सरोषं बद्ध्वा तरौ दुर्वचसाऽभ्यषिञ्चत् ॥ 22-7॥

श्रीनारदायातिथये तया स दत्तोथ मुक्तो मुनिना च नीतः ।
ततस्तयाऽस्मै कनकं प्रदाय पुनर्गृहीतस्त्रपयाऽऽप मौनम् ॥ 22-8॥

सूतीगृहाद्भीष्मकजासुते स प्रद्युम्ननाम्नीश्वरि शम्बरेण ।
हृते शिशौ निर्मथिताभिमान उच्चै रुदंस्त्वां शरणं प्रपन्नः ॥ 22-9॥

पुत्रार्थिनीं जाम्बवतीमपुत्रां स तोषयिष्यन्नुपमन्युशिष्यः ।
मुण्डी च दण्डी च शिवस्य शैले मन्त्रं जपन् घोरतपश्चकार ॥ 22-10॥

वरेण भर्गस्य दशात्मजान् सा प्रासूत सर्वा दयिताश्च शौरेः ।
तथैव लब्ध्वा स सुतायुतानि सुखं न लेभे निजकर्मदोषात् ॥ 22-11॥

शापादृषीणां धृतराष्ट्रपत्न्याश्चान्योन्यवैरेण कृताहवेषु ।
सर्वे हता हन्त कुलं यदूनां महत्प्रदग्धं वनमग्निनेव ॥ 22-12॥

व्याधेषुविद्धो मृतिमाप कृष्णः कुशस्थली चाब्धिजलाप्लुताऽभूत् ।
हा जह्रिरे दस्युभिरेनसाऽष्टावक्रस्य शापेन यदुस्त्रियश्च ॥ 22-13॥

एवं हरिः कर्मफलान्यभुङ्क्त न कोऽपि मुच्येत च कर्मबन्धात् ।
दुःखं त्वभक्तस्य सुदुस्सहं स्याद्भक्तस्य ते तत्सुसहं भवेच्च ॥ 22-14॥

जानास्यहं ते पदयोरभक्तो भक्तो नु किं वेति न चैव जाने ।
त्वं सर्वशक्ता कुरु मां सुशक्तं सर्वत्र भूयोऽपि शिवे नमस्ते ॥ 22-15॥

## 23 त्रयोविंशदशकः - महालक्ष्म्यवतारः

रम्भस्य पुत्रो महिषासुरः प्राक् तीव्रैस्तपोभिर्द्रुहिणात्प्रसन्नात् ।
अवध्यतां पुम्भिरवाप्य धृष्टो न मे मृतिः स्यादिति च व्यचिन्तीत् ॥ 23-1॥

स चिक्षुराद्यैरसुरैः समेतः शक्रादिदेवान्युधि पद्मजं च ।
रुद्रं च विष्णुं च विजित्य नाके वसन् बलाद्यज्ञहविर्जहार ॥ 23-2॥

चिरं भृशं दैत्यनिपीडितास्ते देवाः समं पद्मजशङ्कराभ्याम् ।
हरिं समेत्यासुरदौष्ट्यमूचुस्त्वां संस्मरन् देवि मुरारिराह ॥ 23-3॥

सुरा वयं तेन रणेऽतिघोरे पराजिता दैत्यवरो बलिष्ठः ।
मत्तो भृशं पुम्भिरवध्यभावान्न नः स्त्रियो युद्धविचक्षणाश्च ॥ 23-4॥

तेजोभिरेका भवतीह नश्चेत्सैवासुरान् भीमबलान्निहन्ता ।
यथा भवत्येतदरं तथैव सम्प्रार्थयामोऽवतु नो महेशी ॥ 23-5॥

एवं हरौ वक्तरि पद्मजातात्तेजोऽभवद्राजसरक्तवर्णम् ।
शिवादभूत्तामसरौप्यवर्णं नीलप्रभं सात्त्विकमच्युताच्च ॥ 23-6॥

तेजांस्यभूवन् विविधानि शक्रमुखामरेभ्यो मिषतोऽखिलस्य ।
सम्योगतस्तान्यचिरेण मातः स्त्रीरूपमष्टादशहस्तमापुः ॥ 23-7॥

तत्तु त्वमासीः शुभदे महालक्ष्म्याख्या जगन्मोहनमोहनाङ्गी ।
त्वं ह्येव भक्ताभयदानदक्षा भक्तद्रुहां भीतिकरी च देवि ॥ 23-8॥

सद्यस्त्वमुच्चैश्चकृषेऽट्टहासं सुराः प्रहृष्टा वसुधा चकम्पे ।
चुक्षोभ सिन्धुर्गिरयो विचेलुर्दैत्यश्च मत्तो महिषश्चुकोप ॥ 23-9॥

त्वां सुन्दरीं चारमुखात् स दैत्यो विज्ञाय कामी विससर्ज दूतम् ।
स चेश्वरीं दैत्यगुणान् प्रवक्ता त्वां नेतुकामो विफलोद्यमोऽभूत् ॥ 23-10॥

प्रलोभनैस्त्वामथ देवशक्तिं ज्ञात्वाऽपि वाक्यैरनुनेतुकामः ।
एकैकशः प्रेषयतिस्म दूतान् त्वां कामिनीं कर्तुमिमे न शेकुः ॥ 23-11॥

अवेहि मां पुच्छविषाणहीनं भारं वहन्तं महिषं द्विपादम् ।
हिंसन्ति मां स्वर्थिजनास्त्वमेव रक्षाकरी मे शुभदे नमस्ते ॥ 23-12॥

24 चतुर्विंशदशकः - महिषासुरवधम् - देवीस्तुतिः

देवि त्वया बाष्कलदुर्मुखादिदैत्येषु वीरेषु रणे हतेषु ।
सद्वाक्यतस्त्वामनुनेतुकामो मोघप्रयत्नो महिषश्चुकोप ॥ 24-1॥

त्वां कामरूपः खुरपुच्छशृङ्गैर्नानास्त्रशस्त्रैश्च भृशं प्रहर्ता ।
गर्जन् विनिन्दन् प्रहसन् धरित्रीं प्रकम्पयंश्चासुरराड्युयोध ॥ 24-2॥

जपारुणाक्षी मधुपानतुष्टा त्वं चारिणाऽरेर्महिषस्य कण्ठम् ।
छित्वा शिरो भूमितले निपात्य रणाङ्गणस्था विबुधैः स्तुताऽभूः ॥ 24-3॥

मातस्त्वया नो विपदो निरस्ता अशक्यमन्यैरिदमद्भुताङ्गि ।
ब्रह्माण्डसर्गस्थितिनाशकर्त्रीं कस्त्वां जयेत् केन कथं कुतो वा ॥ 24-4॥

विद्यास्वरूपाऽसि महेशि यस्मिन् स वै परेषां सुखदः कविश्च ।
त्वं वर्तसे यत्र सदाऽप्यविद्यास्वरूपिणी स त्वधमः पशुः स्यात् ॥ 24-5॥

कृपाकटाक्षास्तव देवि यस्मिन् पतन्ति तस्यात्मजवित्तदाराः ।
यच्छन्ति सौख्यं न पतन्ति यस्मिन् त एव दुःखं ददतेऽस्य नूनम् ॥ 24-6॥

पश्याम नित्यं तव रूपमेतत्कथाश्च नामानि च कीर्तयाम ।
नमाम मूर्ध्ना पदपङ्कजे ते स्मराम कारुण्यमहाप्रवाहम् ॥ 24-7॥

त्वमेव माताऽसि दिवौकसां नो नान्या द्वितीया हितदानदक्षा ।
अन्ये सुता वा तव सन्ति नो वा न रक्षिता नस्त्वदृते महेशि ॥ 24-8॥

क्व त्वं वयं क्वेति विचिन्त्य सर्वं क्षमस्व नो देव्यपराधजालम् ।

यदा यदा नो विपदो भवन्ति तदा तदा पालय पालयास्मान् ॥ 24-9॥

इति स्तुवत्सु त्रिदशेषु सद्यः कृपाश्रुनेत्रैव तिरोदधाथ ।
ततो जगद्देवि विभूतिपूर्णं बभूव धर्मिष्ठसमस्तजीवम् ॥ 24-10॥

त्वां संस्मरेयं न च वा स्मरेयं विपत्सु मा विस्मर मां विमूढम् ।
रुदन् बिडालार्भकवन्न किञ्चिच्छक्नोमि कर्तुं शुभदे नमस्ते ॥ 24-11॥

25 पञ्चविंशदशकः - महासरस्वत्यवतारः

सुम्भादिवधम्
अथामराः शत्रुविनाशतृप्ताश्चिराय भक्त्या भवतीं भजन्तः ।
मन्दीभवद्भक्तिहृदः क्रमेण पुनश्च दैत्याभिभवं समीयुः ॥ 25-1॥

सुम्भो निसुम्भश्च सहोदरौ स्वैः प्रसादितात्पद्मभवात्तपोभिः ।
स्त्रीमात्रवध्यत्वमवाप्य देवान् जित्वा रणेऽध्यूषतुरैन्द्रलोकम् ॥ 25-2॥

भ्रष्टश्रियस्ते तु गुरूपदेशाद्धिमाद्रिमाप्ता नुनुवुः सुरास्त्वाम् ।
तेषां पुरश्चाद्रिसुताऽऽविरासीत्स्नातुं गता सा किल देवनद्याम् ॥ 25-3॥

तद्देहकोशात्त्वमजा प्रजाता यतः प्रसिद्धा खलु कौशिकीति ।
महासरस्वत्यभिधां दधाना त्वं राजसीशक्तिरितीर्यसे च ॥ 25-4॥

हिमाद्रिशृङ्गेषु मनोहराङ्गी सिंहाधिरूढा मृदुगानलोला ।
श्रोत्राणि नेत्राण्यपि देहभाजां चकर्षिथाष्टादशबाहुयुक्ता ॥ 25-5॥

विज्ञाय सुम्भः किल दूतवाक्यात्त्वां मोहनाङ्गीं दयितां चिकीर्षुः ।
त्वदन्तिके प्रेषयतिस्म दूतानेकैकशः स्निग्धवचोविलासान् ॥ 25-6॥

त्वां प्राप्य ते कालिकया समेतामेकैकशः सुम्भगुणान् प्रभाष्य ।
पत्नी भवास्येति कृतोपदेशास्तत्प्रातिकुल्यात्कुपिता बभूवुः ॥ 25-7॥

सुम्भाज्ञया धूम्रविलोचनाख्यो रणोद्यतः कालिकया हतोऽभूत् ।
चण्डं च मुण्डं च निहत्य काली त्वत्फालजा तद्रुधिरं पपौ च ॥ 25-8॥

चामुण्डिकेति प्रथिता ततः सा त्वां रक्तबीजोऽध युयुत्सुराप ।
यद्रक्तबिन्दूद्भवरक्तबीजसङ्घैर्जगद्व्याप्तमभूदशेषम् ॥ 25-9॥

ब्रह्मेन्द्रपाश्यादिकदेवशक्तिकोट्यो रणं चक्रुररातिसङ्घैः ।
तत्सङ्गरं वर्णयितुं न शक्तः सहस्रजिह्वोऽपि पुनःकिमन्ये ॥ 25-10॥

रणेऽतिघोरे विवृतानना सा काली स्वजिह्वां खलु चालयन्ती ।

त्वच्छस्त्रकृत्ताखिलरक्तबीजरक्तं पपौ गर्जनभीतदैत्या ॥ 25-11॥

त्वया निसुम्भस्य शीरो निकृत्तं सुम्भस्य तत्कालिकयाऽपि चान्ते ।

अन्येऽसुरास्त्वां शिरसा प्रणम्य पातालमापुस्त्वदनुग्रहेण ॥ 25-12॥

हतेषु देवा रिपुषु प्रणम्य त्वां तुष्टुवुः स्वर्गमगुः पुनश्च ।

ते पूर्ववद्यज्ञहविर्हरन्तो भूमाववर्षन् जहृषुश्च मर्त्याः ॥ 25-13॥

मातर्मदीये हृदि सन्ति दम्भदर्पाभिमानाद्यसुरा बलिष्ठाः ।

निहत्य तान् देह्यभयं सुखं च त्वमेव माता मम ते नमोऽस्तु ॥ 25-14॥

## 26 षड्विंशदशकः - सुरथकथा

राजा पुराऽऽसित् सुरथाभिधानःस्वारोचिषे चैत्रकुलावतंसः ।

मन्वन्तरे सत्यरतो वदान्यः सम्यक्प्रजापालनमात्रनिष्ठः ॥ 26-1॥

वीरोऽपि दैवात्समरे स कोलाविध्वंसिभिः शत्रुबलैर्जितः सन् ।

त्यक्त्वा स्वराज्यं वनमेत्य शान्तं सुमेधसं प्राप मुनिं शरण्यम् ॥ 26-2॥

तपोवनं निर्भयमावसन्द्रुमच्छायाश्रितः शीतलवातपृक्तः ।

स एकदा राज्यगृहादिचिन्तापर्याकुलः कञ्चिदपश्यदार्तम् ॥ 26-3॥

राजा तमूचे सुरथोऽस्मि नाम्ना जितोऽरिभिर्भ्रष्टविभूतिजालः ।

गृहादिचिन्तामथितान्तरङ्गः कुतोऽसि कस्त्वं वद मां समस्तम् ॥ 26-4॥

श्रुत्वेति स प्रत्यवदत्समाधिनामाऽस्मि वैश्यो हृतसर्ववित्तः ।

पत्नीसुताद्यैः स्वगृहान्निरस्तस्तथाऽपि सोत्कण्ठमिमान् स्मरामि ॥ 26-5॥

अनेन साकं सुरथो विनीतो मुनिं प्रणम्याह समधिनामा ।

गृहान्निरस्तोऽपि गृहादिचिन्तां करोति सोत्कण्ठमयं महर्षे ॥ 26-6॥

ब्रह्मैव सत्यं परमद्वितीयं मिथ्या जगत्सर्वमिदं च जाने ।

तथाऽपि मां बाधत एव राज्यगृहादिचिन्ता वद तस्य हेतुम् ॥ 26-7॥

ऊचे तपस्वी शृणु भूप माया सर्वस्य हेतुः सगुणाऽगुणा सा ।

बन्धं च मोक्षं च करोति सैव सर्वेऽपि मायावशगा भवन्ति ॥ 26-8॥

ज्ञानं हरेरस्ति विधेश्च किन्तु क्वचित्कदाचिन्निमिलितौ मिथस्तौ ।

विमोहितौ कस्त्वमरे नु कस्त्वमेवं विवादं किल चक्रतुः स्म ॥ 26-9॥

ज्ञानं द्विधैकं त्वपरोक्षमन्यत्परोक्षमप्येतदवेहि राजन् ।
आद्यं महेश्याः कृपया विरक्त्या भक्त्या महत्सङ्गमतश्च लभ्यम् ॥ 26-10॥

य एतदाप्नोति स सर्वमुक्तो द्वेषश्च रागश्च न तस्य भूप ।
ज्ञानं द्वितीयं खलु शास्त्रवाक्यविचारतो बुद्धिमतैव लभ्यम् ॥ 26-11॥

शमादिहीनो न च शास्त्रवाक्यविचारमात्रेण विमुक्तिमेति ।
देव्याः कटाक्षैर्लभते च भुक्तिं मुक्तिं च सा केवलभक्तिगम्या ॥ 26-12॥

सम्पूज्य तां साकमनेन दुर्गां कृत्वा प्रसन्नां स्वहितं लभस्व ।
श्रुत्वा मुनेर्वाक्यमुभौ महेशि त्वां पूजयामासतुरिद्धभक्त्या ॥ 26-13॥

वर्षद्वयान्ते भवतीं समीक्ष्य स्वप्ने सतोषावपि तावतृप्तौ ।
दिदृक्षया जाग्रति चापि भक्तावाचेरतुर्द्वौ कठिनव्रतानि ॥ 26-14॥

वर्षत्रयान्ते सुमुखीं प्रसन्नां त्वां वीक्ष्य तौ तुष्टुवतुः प्रहृष्टौ ।
दैवात्समाधिस्त्वदनुग्रहेण लब्ध्वा परं ज्ञानमवाप मुक्तिम् ॥ 26-15॥

भोगाविरक्तः सुरथस्तु शीघ्रं निष्कण्टकं राज्यमवाप भूयः ।
मन्वन्तरे भूपतिरष्टमे स सावर्णिनामा च मनुर्बभूव ॥ 26-16॥

त्वं भुक्तिकामाय ददासि भोगं मुमुक्षवे संसृतिमोचनं च ।
किञ्चिन्न पृच्छामि परं विमूढो नमामि ते पादसरोजयुग्मम् ॥ 26-17॥

27 सप्तविंशदशकः - शताक्ष्यवतारः

दैत्यः पुरा कश्चन दुर्गमाख्यः प्रसादितात्पद्मभवात्तपोभिः ।
अवैदिकं वैदिकमप्यगृह्णात्मन्त्रं समस्तं दिविषज्जयैषी ॥ 27-1॥

वेदे गृहीते दितिजेन विप्राः श्रुतिस्थिरा विस्मृतवेदमन्त्राः ।
सान्ध्यानि कर्माण्यपि नैव चक्रुः क्षितिस्त्ववेदाध्ययना बभूव ॥ 27-2॥

हृतेषु मन्त्रेष्वखिलेषु पूजायज्ञादि भूमौ न कृतं मनुष्यैः ।
सुरा अशक्तास्तदलाभखिन्ना दैत्येन युद्धे बलिना जिताश्च ॥ 27-3॥

त्यक्त्वा दिवं ते गिरिगह्वरेषु निलीय वर्षाणि बहूनि निन्युः ।
वृष्टेरभावाद्धरणी च शुष्कजलाशया तर्षनिपीडिताऽभूत् ॥ 27-4॥

सर्वे तृषार्ताश्च हिमाद्रिमेत्य त्वां ध्यानपूजानुतिभिर्भजन्तः ।
प्रसादयामासुरनेककोटिब्रह्माण्डकर्त्रीमखिलार्तिहन्त्रीम् ॥ 27-5॥

दृष्ट्वा दयार्द्राक्षिशता त्वमेभिः कृपाश्रुवर्षैर्नवरात्रमुर्व्याम् ।
जलाशयान्पूर्णजलांश्चकर्थ जनाः शताक्षीत्यभिधां ददुस्ते ॥ 27-6॥

क्षुत्पीडितानां च चराचराणां सर्वत्र नानाविधमन्नमिष्टम् ।
स्वादूनि मूलानि फलानि चादाः शाकम्भरीति प्रथिता ततोऽभूः ॥ 27-7॥

दैत्यस्तु विज्ञाय समस्तमस्त्रशस्त्रैः ससैन्यः प्रहरन् वपुस्ते ।
रणाङ्गणे सायकविद्धगात्रः सशब्दमुर्व्यां तरुवत्पपात ॥ 27-8॥

स चासुरात्मा खलु वेदमन्त्रान् चिरं पठंस्त्वामभिवीक्षमाणः ।
गतायुराविश्य परात्मनि त्वय्यवाप मुक्तिं मिषतां सुराणाम् ॥ 27-9॥

वेदान्हृतानब्जभवानने त्वं पुनश्च निक्षिप्य जगत्सुरक्षाम् ।
कृत्वा नुता देवगणैर्नरैश्च तुष्टा तिरोऽभूः करुणार्द्रनेत्रा ॥ 27-10॥

भक्तस्य वै दुर्गतिनाशिनी त्वं सुखप्रदा दुर्गमहन्त्रि मातः ।
दुर्गेति नाम्ना विदिता च लोके विचित्ररूपास्तव देवि लीलाः ॥ 27-11॥

कोऽप्यस्ति चित्ते मम दुर्गमोऽयं ज्ञातस्त्वया नैव मया तु देवि ।
यः सन्ततं द्रुह्यति मे तमाशु संहृत्य मां रक्ष नमो नमस्ते ॥ 27-12॥

28 अष्टाविंशदशकः - शक्त्यवमानदोषः

हालाहलाख्यानसुरान् पुरा तु निजघ्नतुर्विष्णुहरौ रणान्ते ।
स्वेनैव वीर्येण जयोऽयमेवं तौ मोहितौ दर्पमवापतुश्च ॥ 28-1॥

ततो विधिस्तौ तरुवद्विचेष्टौ तेजोविहीनावभिवीक्ष्य भीतः ।
निमीलिताक्षः सकलं विचिन्त्य जानन् सुतान् दक्षमुखानुवाच ॥ 28-2॥

पुत्रा हरिं पश्यत धूर्जटिं च यौ नष्टशक्ती खलु शक्तिकोपात् ।
ततो जगद्भारयुतोऽस्मि यूयं शक्तिं तपोभिः कुरुत प्रसन्नाम् ॥ 28-3॥

शक्तेः प्रसादेन हि पूर्ववत्तौ स्यातां यशोवृद्धिरनेन वः स्यात् ।
शक्तिश्च यत्रावतरत्यमोघमेतत्कुलं याति कृतार्थतां च ॥ 28-4॥

शक्तेः कटाक्षैर्जगतोऽस्तु भद्रमेवं निशम्याशु हिमाद्रिमेत्य ।
दक्षादयो ध्यानजपादिभिस्त्वामाराध्य भक्त्याऽब्दशतानि निन्युः ॥ 28-5॥

दृष्टा पुरस्तैस्तु नुता त्वमात्थ भीत्यालमार्त्या च हितं ददामि ।
गौरी च लक्ष्मीश्च ममैव शक्ती ते शम्भवे प्राग् हरये च दत्ते ॥ 28-6॥

तौ शक्तिसाहाय्यत एव दैत्यान्निजघ्नतुः सत्यमिदं तु ताभ्याम् ।
हा विस्मृतं शक्त्यवमानदोषाद्विनष्टशक्ती खलु तावभूताम् ॥ 28-7॥

तौ पूर्ववत्स्तामिह शक्तिरेका जायेत दक्षस्य कुले मदीया ।
क्षीराब्धितोऽन्या च पुरारिराद्यां गृह्णातु पश्चादितरां च विष्णुः ॥ 28-8॥

सर्वे स्वशक्तिं परिपूज्य मायाबीजादिमन्त्रान्विधिवज्जपन्तः ।
विराट्स्वरूपं मम रूपमेतत्सच्चित्स्वरूपं च सदा स्मरेत ॥ 28-9॥

प्रयात तुष्टा जगतां शुभं स्यादेवं त्वमाभाष्य तिरोदधाथ ।
कारुण्यतस्ते गिरिशो हरिश्च शक्तावभूतां निजकर्म कर्तुम् ॥ 28-10॥

मातः कटाक्षा मयी ते पतन्तु मा माऽस्तु मे शक्त्यवमानपापम् ।
सर्वान्स्वधर्मान् करवाण्यभीतो भद्रं मम स्यात्सततं नमस्ते ॥ 28-11॥

## 29 एकोनत्रिंशदशकः - देवीपीठोत्पत्तिः

अथैकदाऽदृश्यत दक्षगेहे शाक्तं महस्तच्च बभूव बाला ।

विज्ञाय ते शक्तिमिमां जगत्सु सर्वेऽपि हृष्टा अभवन् क्षणश्च ॥ 29-1॥

दक्षः स्वगेहापतितां चकार नाम्ना सतीं पोषयति स्म तां सः ।

स्मरन् वचस्ते गिरिशाय काले प्रदाय तां द्वौ समतोषयच्च ॥ 29-2॥

एवं शिवःशक्तियुतः पुनश्च बभूव गच्छत्सु दिनेषु दक्षः ।

दैवाच्छिवद्वेषमवाप देहं तत्पोषितं स्वं विजहौ सती च ॥ 29-3॥

दुःखेन कोपेन च हा सतीति मुहुर्वदन्नुद्धृतदारदेहः ।

बभ्राम सर्वत्र हरः सुरेषु पश्यत्सु शार्ङ्गी शिवमन्वचारीत् ॥ 29-4॥

रुद्रांसविन्यस्तसतीशरीरं विष्णुः शरौघैर्बहुशश्चकर्त ।

एकैकशः पेतुरमुष्य खण्डा भूमौ शिवे साष्टशतं स्थलेषु ॥ 29-5॥

यतो यतः पेतुरिमे स्थलानि सर्वाणि तानि प्रथितानि लोके ।

इमानि पूतानि भवानि देवीपीठानि सर्वाघहराणि भान्ति ॥ 29-6॥

त्वमेकमेवाद्वयमत्र भिन्ननामानि धृत्वा खलु मन्त्रतन्त्रैः ।

सम्पूज्यमाना शरणागतानां भुक्तिं च मुक्तिं च ददासि मातः ॥ 29-7॥

निर्विण्णचित्तः स सतीवियोगाच्छिवः स्मरंस्त्वां कुहचिन्निषण्णः ।
समाधिमग्नोऽभवदेष लोकः शक्तिं विना हा विरसोऽलसश्च ॥ 29-8॥

चिन्ताकुला मोहधियो विशीर्णतोषा महारोगनिपीडिताश्च ।
सौभाग्यहीना विहताभिलाषाः सर्वे सदोद्विग्नहृदो बभूवुः ॥ 29-9॥

शिवोऽपि शक्त्या सहितः करोति सर्वं वियुक्तश्च तया जडः स्यात् ।
मा माऽस्तु मे शक्तिवियोग एष दासोऽस्मि भूयो वरदे नमस्ते ॥ 29-10॥

30 त्रिंशदशकः - श्रीपार्वत्यवतारः

समाधिमग्ने गिरिशे विरिञ्चात्तपःप्रसन्नात्किल तारकाख्यः ।
दैत्यो वरं प्राप्य विजित्य देवान् सबान्धवः स्वर्गसुखान्यभुङ्क्त 1 ॥

वरैः स भर्गौरसपुत्रमात्रवध्यत्वमाप्तोऽस्य च पत्न्यभावात् ।
सर्वाधिपत्यं स्वबलं च मोहान्मत्तो भृशं शाश्वतमेव मेने ॥ 30-2॥

नष्टाखिलाः श्रीहरये सुरास्ते निवेदयामासुरशेषदुःखम् ।

स चाह देवा अनयेन नूनमुपेक्षते नो जननी कृपार्द्रा ॥ 30-3॥

तद्विस्मृतेर्जातमिदं करेण यष्ट्या च या ताडयति स्वपुत्रम् ।
तामेव बालः स निजेष्टदात्रीं सास्रं रुदन्मातरमभ्युपैति ॥ 30-4॥

माता हि नः शक्तिरिमां प्रसन्नां कुर्याम भक्त्या तपसा च शीघ्रम् ।
सर्वापदः सैव हरिष्यतीति श्रुत्वामरास्त्वां नुनुवुर्महेशि ॥ 30-5॥

निशम्य तेषां श्रुतिवाक्यगर्भस्तुतिं प्रसन्ना विबुधांस्त्वमात्थ ।
अलं विषादेन सुराः समस्तं जाने हरिष्यामि भयं द्रुतं वः ॥ 30-6॥

हिमाद्रिपुत्री विबुधास्तदर्थं जायेत गौरी मम शक्तिरेका ।
सा च प्रदेया वृषभध्वजाय तयोः सुतस्तं दितिजं च हन्यात् ॥ 30-7॥

इत्थं निशम्यास्तभयेषु देवेष्वभ्यर्थिता देवि हिमाचलेन ।
त्वं वर्णयन्ती निजतत्त्वमेभ्यः प्रदर्शयामासिथ विश्वरूपम् ॥ 30-8॥

सहस्रशीर्षं च सहस्रवक्त्रं सहस्रकर्णं च सहस्रनेत्रम् ।
सहस्रहस्तं च सहस्रपादमनेकविद्युत्प्रभमुज्ज्वलं च ॥ 30-9॥

दृष्ट्वेदमीश्वर्यखिलैर्भियोक्ता त्वं चोपसंहृत्य विराट्स्वरूपम् ।

कृपावती स्मेरमुखी पुनश्च निवृत्तिमार्गं गिरये न्यगादीः ॥ 30-10॥

उक्त्वाऽखिलं संसृतिमुक्तिमार्गं सुरेषु पश्यत्सु तिरोदधाथ ।

श्रुत्वाऽद्रिमुख्यास्तव गीतमुच्चैर्देवा जपध्यानपरा बभूवुः ॥ 30-11॥

अथैकदा प्रादुरभूद्धिमाद्रौ शाक्तं महो दक्षगृहे यथा प्राक् ।

क्रमेण तद्देवि बभूव कन्या सा पार्वतीति प्रथिता जगत्सु ॥ 30-12॥

हिमाद्रिणैषा च हराय दत्ता तयोः सुतः स्कन्द इति प्रसिद्धः ।

स तारकाख्यं दितिजं निहत्य ररक्ष लोकानखिलान् महेशि ॥ 30-13॥

दुर्वाससः शापबलेन शक्रो नष्टाखिलश्रीर्वचनेन विष्णोः ।

क्षीरोदधिं सासुरदेवसङ्घो ममन्थ तस्मादुदभूच्च लक्ष्मीः ॥ 30-14॥

या पूजितेन्द्रेण रमा तवैका शक्तिः स्वैरैश्वर्यपुनःप्रदानात् ।

शापान्मुनेर्देवगणान्विमोच्य कटाक्षतस्ते हरिमाप भूयः ॥ 30-15॥

त्वं सर्वशक्तिर्न जिताऽसि केनाप्यन्यान् जयस्येव सदा शरण्या ।

मातेव पत्नीव सुतेव वा त्वं विभासि भक्तस्य नमो नमस्ते ॥ 30-16॥

31 एकत्रिंशदशकः -    भ्रामर्यवतारः

कश्चित्पुरा मन्त्रमुदीर्य गायत्रीति प्रसिद्धं दितिजोऽरुणाख्यः ।

चिराय कृत्वा तप आत्मयोनेः प्रसादितादाप वरानपूर्वान् ॥ 31-1॥

स्त्रीपुम्भिरस्त्रैश्च रणे द्विपादैश्चतुष्पदैश्चाप्युभयात्मकैश्च ।

अवध्यतां देवपराजयं च लब्ध्वा स दृप्तो दिवमाससाद ॥ 31-2॥

रणे जिता दैत्यभयेन लोकपालैः सह स्वस्वपदानि हित्वा ।

देवा द्रुताः प्राप्य शिवं रिपूणां संयग्वधोपायमचिन्तयंश्च ॥ 31-3॥

तदाऽभवत्काप्यशरीरिणी वाग्भजेत देवीं शुभमेव वः स्यात् ।

दैत्योऽरुणो वर्धयतीह गायत्र्युपासनेनात्मबलं त्वधृष्यम् ॥ 31-4॥

यद्येष तं मन्त्रजपं जहाति स दुर्बलः साध्यवधोऽपि च स्यात् ।

एवं निशम्य त्रिदशैः प्रहृष्टैरभ्यर्थितो देवगुरुः प्रतस्थे ॥ 31-5॥

स प्राप दैत्यं यतिरूपधारी प्रत्युद्गतो मन्त्रजपातिसक्तम् ।

स्मितार्द्रमूचे कुशली सबन्धुमित्रो भवान् किं जगदेकवीर ॥ 31-6॥

दैत्यस्य ते मन्त्रजपेन किं यो नूनं बलिष्ठं त्वबलं करोति।

येनैव देवा अबला रणेषु त्वया जितास्त्वं स्वहितं कुरुष्व॥ 31-7॥

संन्यासिनो मन्त्रजपेन रागद्वेषादि जेतुं सततं यतन्ते।

न त्वं यतिर्नापि मुमुक्षुरर्थकामातिसक्तस्य जपेन किं ते॥ 31-8॥

एकं हि मन्त्रं समुपास्वहे द्वौ तेनासि मित्रं मम तद्वदामि।

मन्त्रश्च मे मुक्तिद एव तुभ्यं वृद्धिं न दद्यादयमित्यवेहि॥ 31-9॥

बृहस्पतावेवमुदीर्य याते सत्यं तदुक्तं दितिजो विचिन्त्य।

क्रमाज्जहौ मन्त्रजपं सदा हि मूढः परप्रोक्तविनेयबुद्धिः॥ 31-10॥

एवं गुरौ कुर्वति दैत्यभीतैः कृत्वा तपोयोगजपाध्वरादि।

जाम्बूनदेश्वर्यमरैः स्तुता त्वं प्रसादिता प्रादुरभूः कृपार्द्रा॥ 31-11॥

त्वद्देहजातैर्भ्रमरैरनन्तैर्दैत्यः ससैन्यो विफलास्त्रशस्त्रः।

दष्टो हतस्त्वं च नुतिप्रसन्ना पश्यत्सु देवेषु तिरोहिताऽभूः॥ 31-12॥

स्वदेहतो वै भ्रमरान् विधात्री त्वं भ्रामरीति प्रथिता जगत्सु।

अहो विचित्रास्तव देवि लीलाः नमो नमस्ते भुवनेशि मातः ॥ 31-13॥

32 द्वात्रिंशदशकः - यक्षकथा

पुरा सुरा वर्षशतं रणेषु निरन्तरेषु त्वदनुग्रहेण ।
विजित्य दैत्यान् जननीमपि त्वां विस्मृत्य दृप्ता नितरां बभूवुः ॥ 32-1॥

मयैव दैत्या बलवत्तरेण हता न चान्यैरिति शक्रमुख्याः ।
देवा अभूवन्नतिदर्पवन्तस्त्वं देवि चान्तः कुरुषे स्म हासम् ॥ 32-2॥

तच्चित्तदर्पासुरनाशनाय तेजोमयं यक्षवपुर्दधाना ।
त्वं नातिदूरे स्वयमाविरासीस्त्वां वासवाद्या ददृशुः सुरौघाः ॥ 32-3॥

सद्यः किलाशङ्क्यत तैरिदं किं मायाऽऽसुरी वेति ततो मघोना ।
अग्निर्नियुक्तो भवतीमवाप्तः पृष्टस्त्वया कोऽसि कुतोऽसि चेति ॥ 32-4॥

स चाह सर्वैर्विदितोऽग्निरस्मि मय्येव तिष्ठत्यखिलं जगच्च ।
शक्नोमि दग्धुं सकलं हविर्भुङ्क्द्वीर्यतो दैत्यगणा जिताश्च ॥ 32-5॥

इतीरिता शुष्कतृणं त्वमेकं पुरो निधायात्थ दहैतदाशु ।

एवं ज्वलन्नग्निरिदं च दग्धुं कुर्वन् प्रयत्नं न शशाक मत्तः ॥ 32-6॥

स नष्टगर्वः सहसा निवृत्तस्ततोऽनिलो वज्रभृता नियुक्तः ।
त्वां प्राप्तवानग्निवदेव पृष्टो देवि स्वमाहात्म्यवचो बभाषे ॥ 32-7॥

मां मातरिश्वानमवेहि सर्वे व्यापारवन्तो हि मयैव जीवाः ।
न प्राणिनःसन्ति मया विना च गृह्णामि सर्वं चलयामि विश्वम् ॥ 32-8॥

इत्युक्तमाकर्ण्य तृणं तदेव प्रदर्श्य चैतच्चलयेत्यभाणीः ।
प्रभञ्जनस्तत्स च कर्म कर्तुमशक्त एवास्तमदो निवृत्तः ॥ 32-9॥

अथातिमानी शतमन्युरन्तरग्निं च वायुं च हसन्नवाप ।
त्वां यक्षरूपां सहसा तिरोऽभूः सोऽदह्यतान्तः स्वलघुत्वभीत्या ॥ 32-10॥

अथ श्रुताकाशवचोऽनुसारी ह्रीङ्कारमन्त्रं स चिराय जप्त्वा ।
पश्यन्नुमां त्वां करुणाश्रुनेत्रां ननाम भक्त्या शिथिलाभिमानः॥ 32-11॥

ज्ञानं परं त्वन्मुखतः स लब्ध्वा कृताञ्जलिर्नम्रशिरा निवृत्तः ।
सर्वामरेभ्यः प्रददौ ततस्ते सर्वं त्वदिच्छावशगं व्यजानन् ॥ 32-12॥

ततः सुरा दम्भविमुक्तिमापुर्भवन्तु मर्त्याश्च विनम्रशीर्षाः ।
अन्योन्यसाहाय्यकराश्च सर्वे मा युद्धवार्ता भुवनत्रयेऽस्तु ॥ 32-13॥

त्वदिच्छया सूर्यशशाङ्कवह्निवाय्वादयो देवि सुराः स्वकानि ।
कर्माणि कुर्वन्ति न ते स्वतन्त्रास्तस्यै नमस्तेऽस्तु महानुभावे ॥ 32-14॥

33 त्रयस्त्रिंशदशकः - गौतमकथा

शक्रः पुरा जीवगणस्य कर्मदोषात्समाः पञ्चदश क्षमायाम् ।
वृष्टिं न चक्रे धरणी च शुष्कवापीतडागादिजलाशयाऽऽसीत् ॥ 33-1॥

सस्यानि शुष्काणि खगान् मृगांश्च भुक्त्वाऽप्यतृप्ताः क्षुधया तृषा च ।
निपीडिता मर्त्यशवानि चाहो मर्त्या अनिष्टान्यपि भुञ्जते स्म ॥ 33-2॥

क्षुधाऽर्दिताः सर्वजना महाऽऽपद्विमुक्तिकामा मिलिताः कदाचित् ।
तपोधनं गौतममेत्य भक्त्या पृष्टा मुनिं स्वागमहेतुमूचुः ॥ 33-3॥

विज्ञाय सर्वं मुनिराट् कृपालुः सम्पूज्य गायत्र्यभिधां शिवे त्वाम् ।
प्रसाद्य दृष्ट्वा च तवैव हस्ताल्लेभे नवं कामदपात्रमेकम् ॥ 33-4॥

दुकूलसौवर्णविभूषणान्नवस्त्रादि गावो महिषादयश्च ।
यद्यज्जनैरीप्सितमाशु तत्तत्तत्पात्रतो देवि समुद्बभूव ॥ 33-5॥

रोगो न दैन्यं न भयं न चैव जना मिथो मोदकरा बभूवुः ।
ते गौतमस्योग्रतपःप्रभावमुच्चैर्जगुस्तां करुणार्द्रतां च ॥ 33-6॥

एवं समा द्वादश तत्र सर्वे निन्युः कदाचिन्मिलितेषु तेषु ।
श्रीनारदो देवि शशीव गायत्र्याश्चर्यशक्तिं प्रगृणन्नवाप ॥ 33-7॥

स पूजितस्तत्र निषण्ण उच्चैर्निवेद्य तां गौतमकीर्तिलक्ष्मीम् ।
सभासु शक्रादिसुरैः प्रगीतां जगाम सन्तो जहृषुः कृतज्ञाः ॥ 33-8॥

काले धरां वृष्टिसमृद्धसस्यां दृष्ट्वा जना गौतममानमन्तः ।
आपृच्छ्य ते सज्जनसङ्गपूता मुदा जवात्स्वस्वगृहाणि जग्मुः ॥ 33-9॥

दुःखानि मे सन्तु यतो मनो मे प्रतप्तसङ्घट्टितहेमशोभि ।
विशुद्धमस्तु त्वयी बद्धरागो भवानि ते देवि नमोऽस्तु भूयः ॥ 33-10॥

34 चतुस्त्रिंशदशकः - गौतमशापः

स्ववासिभिर्गौतमकीर्त्तिरुच्चैर्गीता सभासु त्रिदशैः सदेति ।
आकर्ण्य देवर्षिमुखात्कृतघ्ना द्विजा बभूवुः किल सेर्ष्यचित्ताः ॥ 34-1॥

तैर्मायया ऽऽसन्नमृतिः कृता गौः सा प्रेषिता गौतमहोमशालाम् ।
अगान्मुनेर्जुह्वत एव वह्नौ हुङ्कारमात्रेण पपात चोर्व्याम् ॥ 34-2॥

हता हता गौरिह गौतमेनेत्युच्चैर्द्विजाः प्रोच्य मुनिं निनिन्दुः ।
स चेद्धकोपः प्रलयानलाभस्तान् रक्तनेत्रः प्रशपन्नुवाच ॥ 34-3॥

व्रतेषु यज्ञेषु निवृत्तिशास्त्रेष्वपि द्विजा वो विमुखत्वमस्तु ।
निषिद्धकर्माचरणे रताः स्त स्त्रियः प्रजा वोऽपि तथा भवन्तु ॥ 34-4॥

सत्सङ्गमो माऽस्तु जगज्जनन्याः कथामृते वो न रतिः खलु स्यात् ।
पाषण्डकापालिकवृत्तिपापैः पीडा भवेद्वो नरकेषु नित्यम् ॥ 34-5॥

उक्त्वैवमार्यो मुनिरेत्य गायत्र्याख्यां कृपार्द्रां भवतीं ननाम ।
त्वमात्थ दुग्धं भुजगाय दत्तं दातुः सदाऽनर्थदमेव विद्धि ॥ 34-6॥

सदेदृशी कर्मगतिर्महर्षे शान्तिं भज स्वं तप एव रक्ष ।
मा कुप्यतामेवमृषिर्निशम्य महानुतापार्द्रमना बभूव ॥ 34-7॥

शप्ता द्विजा विस्मृतवेदमन्त्रा लब्ध्वा विवेकं मिलिता मुन्निं तम् ।
प्राप्ताः प्रसीदेति मुहुर्वदन्तो नत्वा त्रपानम्रमुखा अतिष्ठन् ॥ 34-8॥

कृपार्द्रनेत्रो मुनिराह न स्यान्मृषा वचो मे नरके वसेत ।
जायेत विष्णुर्भुवी कृष्णनामा वन्देत तं शापविमोचनार्थम् ॥ 34-9॥

स्वपापमुक्त्यर्थमनन्तशक्तिं देवीं सदा ध्यायत भक्तिपूताः ।
सर्वत्र भूयाच्छुभमित्युदीर्य गायत्रि दध्यौ भवतीं महर्षिः ॥ 34-10॥

मुञ्चानि मा वाक्शरमन्यचित्ते कृतघ्नता माऽस्तु ममान्तरङ्गे ।
निन्दानि मा सज्जनमेष भीतो भवानि पापाद्वरदे नमस्ते ॥ 34-11॥

35 पञ्चत्रिंशदशकः - अनुग्रहवैचित्र्यम्

भाग्योदये त्रीणि भवन्ति नूनं मनुष्यता सज्जनसङ्गमश्च ।
त्वदीयमाहात्म्यकथाश्रुतिश्च यतः पुमांस्त्वत्पदभक्तिमेति ॥ 35-1॥

ततः प्रसीदस्यखिलार्थकामान् भक्तस्य यच्छस्यभयं च मातः ।
क्षमां कृतागस्सु करोषि चार्योरन्योन्यवैरं शमयस्यनीहा ॥ 35-2॥

दुष्कीर्तिभीत्या पृथया कुमार्या त्यक्तं तटिन्यां सुतमर्कलब्धम् ।
सम्प्रार्थिता त्वं परिपालयन्ती प्रादर्शयः स्वं करुणाप्रवाहम् ॥ 35-3॥

सुतान् कुरुक्षेत्ररणे हतान् स्वान् दिदृक्षवे मातृगणाय कृष्णः ।
सम्प्रार्थितस्त्वत्करुणाभिषिक्तः प्रदर्श्य सर्वान् समतोषयच्च ॥ 35-4॥

वणिक् सुशीलः खलु नष्टवित्तो व्रतं चरन् प्राङ्नवरात्रमार्यः ।
त्वां देवि सम्पूज्य दरिद्रभावान्मुक्तः क्रमाद्वित्तसमृद्धिमाप ॥ 35-5॥

देवद्रुहो देवि रणे त्वयैव दैत्या हता गर्हितधर्मशास्त्राः ।
प्रह्लादमुख्यानसुरान् स्वभक्तान् देवांश्च सन्त्यक्तरणानकार्षीः ॥ 35-6॥

पुरन्दरे पापतिरोहिते तत्स्थानाधिरूढान्नहुषात्स्मरार्तात् ।
भीता शची त्वां परिपूज्य दृष्ट्वा पतिं क्रमाद्भीतिविमुक्तिमाप ॥ 35-7॥

शप्तो वसिष्ठेन निमिर्विदेहो भूत्वाऽपि देवि त्वदनुग्रहेण ।
ज्ञानं परं प्राप निमेः प्रयोगान्निमेषिणो जीवगणा भवन्ति ॥ 35-8॥

हा भार्गवा लोभविकोपचित्तैः प्रपीडिता हैहयवंशजातैः ।

हिमाद्रिमाप्ता भवतीं प्रपूज्य प्रसाद्य भीतेः खलु मुक्तिमापुः ॥ 35-9॥

दस्रौ युवानां च्यवनं पतिं च समानरूपानभिदृश्य मुग्धा ।
सती सुकन्या तव संस्मृताया भक्त्या प्रसादात्स्वपतिं व्याजानात् ॥ 35-10॥

सत्यव्रतो विप्रवधूं प्रसह्य हर्ता निरस्तो जनकेन राज्यात् ।
वसिष्ठशप्तोऽपि तव प्रसादाद्राज्येऽभिषिक्तोऽथ दिवं गतश्च ॥ 35-11॥

हा हा हरिश्चन्द्रनृपो विपत्सु मग्नः शताक्षीं परदेवतां त्वाम् ।
संस्मृत्य सद्यः स्वविपन्निवृत्तः कारुण्यतस्ते सुरलोकमाप ॥ 35-12॥

अगस्त्यपूजां परिगृह्य देवि विभासि विन्ध्याद्रिनिवासिनी त्वम् ।
द्रक्ष्ये कदा त्वां मम देहि भक्तिं कारुण्यमूर्ते सततं नमस्ते ॥ 35-13॥

## 36 षट्त्रिंशदशकः - मूलप्रकृतिमहिमा

त्वमेव मूलप्रकृतिस्त्वमात्मा त्वमस्यरूपा बहुरूपिणी च ।
दुर्गा च राधा कमला च सावित्र्याख्या सरस्वत्यपि च त्वमेव ॥ 36-1॥

दुर्गा जगद्दुर्गतिनाशिनी त्वं श्रीकृष्णलीलारसिकाऽसि राधा ।

शोभास्वरूपाऽसि गृहादिषु श्रीर्विद्यास्वरूपाऽसि सरस्वती च ॥ 36-2॥

सरस्वती हा गुरुशापनष्टां त्वं याज्ञवल्क्याय ददाथ विद्याम् ।
त्वामेव वाणीकवचं जपन्तः प्रसाध्य विद्यां बहवोऽधिजग्मुः ॥ 36-3॥

त्वं देवि सावित्र्यभिधां दधासि प्रसादतस्ते खलु वेदमातुः ।
लेभे नृपालोऽश्वपतिस्तनूजां नाम्ना च सावित्र्यभवत्किलैषा ॥ 36-4॥

सा सत्यवन्तं मृतमात्मकान्तमाजीवयन्ती श्वशुरं विधाय ।
दूरीकृतान्ध्यं तनयानसूत यमाद्गुरोराप च धर्मशास्त्रम् ॥ 36-5॥

स्कन्दस्य पत्नी खलु बालकाधिष्ठात्रि च षष्ठीति जगत्प्रसिद्धा ।
त्वं देवसेना धनदाऽधनानामपुत्रिणां पुत्रसुखं ददासि ॥ 36-6॥

सत्कर्मलब्धे तनये मृते तु प्रियव्रतोऽदूयत भक्तवर्यः ।
तं जीवयित्वा मृतमस्य दत्वा स्वभक्तवात्सल्यमदर्शयस्त्वम् ॥ 36-7॥

त्वमेव गङ्गा तुलसी धरा च स्वाहा स्वधा त्वं सुरभिश्च देवि ।
त्वं दक्षिणा कृष्णमयी च राधा दधासि राधामयकृष्णतां च ॥ 36-8॥

त्वं ग्रामदेवी नगराधिदेवी वनाधिदेवी गृहदेवता च ।
सम्पूज्यते भक्तजनैश्च या या सा सा त्वमेवासि महानुभावे ॥ 36-9॥

यद्यच्छ्रुतं दृष्टमपि स्मृतं च तत्तत्त्वदीयं हि कलांशजालम् ।
न किञ्चनास्त्येव शिवे त्वदन्यद्भूयोऽपि मूलप्रकृते नमस्ते ॥ 36-10॥

37 सप्तत्रिंशदशकः - विष्णुमहत्त्वम्

पुरा हरिस्त्वां किल सात्त्विकेन प्रसादयामास मखेन देवि ।
सुरेषु तं श्रेष्ठतमं चकर्थ स तेन सर्वत्र बभूव पूज्यः ॥ 37-1॥

अधर्मवृद्धिश्च यदा त्रिलोके धर्मक्षयश्चापि तदा भवत्या ।
धर्मं समुद्धर्तुमधर्ममृद्धं मार्ष्टुं च देव्येष नियुज्यते हि ॥ 37-2॥

स ईड्यते सर्वत एव सर्वैः पत्न्या च भूतैश्च समं गिरीशः ।
इलावृतेऽपूरुषसन्निधाने सङ्कर्षणाख्यं भजते मुरारिम् ॥ 37-3॥

तमेव भद्रश्रवसो हयास्यं भद्राश्ववर्षे मुनयः स्तुवन्ति ।
प्रह्लाद उच्चैर्हरिवर्षवासी विश्वार्तिशान्त्यै नृहरिं च नौति ॥ 37-4॥

श्रीः केतुमाले खलु कामरूपं तं रम्यके मत्स्यतनुं मनुश्च ।
हिरण्मये कूर्मशरीरभाजं स्तुवन्ति नारायणमर्यमा च ॥ 37-5॥

महावराहं कुरुषूत्तरेषु भू राघवं किम्पुरुषे हनूमान् ।
तं नारदो भारतवर्षवर्ती नरं च नारायणमाश्रयन्ते ॥ 37-6॥

सत्कर्मभूमिर्भरतस्य राज्यं सन्त्यत्र वैकुण्ठकथैकसक्ताः ।
तीर्थानि पुण्याश्रमपर्वताश्च जन्मात्र देवाः स्पृहयन्त्यजस्रम् ॥ 37-7॥

प्रह्लादपौत्रः सुतलाधिवासः सुरक्षितश्चात्मनिवेदनेन ।
वार्धक्यरोगक्लमभीतिमुक्तो महाबलिर्वामनमेव नौति ॥ 37-8॥

सहस्रशीर्षः शिरसा दधत् क्ष्मां हली हरेस्तामसमूर्तिरार्यैः ।
संस्तूयमानःसहनागकन्यः पातालमूले च सलीलमास्ते ॥ 37-9॥

विचित्ररूपं जगतां हिताय सर्वे स्तुवन्त्यच्युतमिद्धभक्त्या ।
एनं कुरु त्वं वरदानदक्षं मातः कृपार्द्रे वरदे नमस्ते ॥ 37-10॥

38 अष्टात्रिंशदशकः - चित्तशुद्धिप्राधान्यम्

अन्तर्मुखो यः स्वशुभेच्छयैव स्वयं विमर्शेन मनोमलानि ।
दृष्ट्वा शमाद्यैर्धुनुते समूलं स भाग्यवान्देवि तव प्रियश्च ॥ 38-1॥

न वेदशास्त्राध्ययनेन तीर्थसंसेवया दानतपोव्रतैर्वा ।
शुद्धिं मनो याति तव स्मृतेस्तद्वैशद्यमादर्शवदेति मातः ॥ 38-2॥

शुद्धिर्न यज्ञेन यजन् शशाङ्कः पत्नीं गुरोः प्राप भृशं स्मरार्तः ।
शतक्रतुर्गौतमधर्मपत्नीमगादहल्यां मदनेषु विद्धः ॥ 38-3॥

स विघ्नकारी तपसां मुनीन्नां गतस्पृहं योगिवरं प्रशान्तम् ।
हा विश्वरूपं पविना जघान न किञ्चनाकार्यमधर्मबुद्धेः ॥ 38-4॥

मुनिर्वसिष्ठः खलु तीर्थसेवी तपोनिधिर्गाधिसुतश्च कोपात् ।
उभौ मिथः शेपतुराडिभावं प्राप्तः किलैको बकतां परश्च ॥ 38-5॥

धनानि पृष्टानि गुरूनदातॄन् स्वान् भार्गवान् पुत्रकलत्रभाजः ।
क्रुद्धाः परं हैहयभूमिपाला न्यपीडयन् कोऽत्र विशुद्धचित्तः ॥ 38-6॥

कुर्यान्न किं लोभहतो मनुष्यो युधिष्ठिराद्या अपि धर्मनिष्ठाः ।
पितामहं बन्धुजनान् गुरूंश्च रणे निजघ्नुः खलु राज्यलोभात् ॥ 38-7॥

कृष्णोपदिष्टो जनमेजयस्तु शुद्धान्तरङ्गः पितरं मखेन ।
परीक्षितं पापविमुक्तमार्यं विधाय ते प्रापयतिस्म लोकम् ॥ 38-8॥

सदा सदाचाररतो विविक्ते देशे निषण्णश्चरणाम्बुजे ते ।
ध्यायन्नजस्रं निजवासना यो निर्मार्ष्टि स त्वन्मयतामुपैति ॥ 38-9॥

ज्ञानं न भक्तिर्न तपो न योगबुद्धिर्न मे चित्तजयोऽपि मातः ।
अन्धं तमोऽहं प्रविशामि मृत्योः समुद्धरेमं वरदे नमस्ते ॥ 38-10॥

39 एकोनचत्वारिंशदशकः - मणिद्वीपनिवासिनी

सुधासमुद्रो जगतां त्रयाणां छत्रीभवन् मञ्जुतरङ्गफेनः।
सवालुकाशङ्खविचित्ररत्नः सतारकव्योमसमो विभाति ॥ 39-1॥

तन्मध्यदेशे विमलं मणिद्वीपाख्यां पदं देवि विराजते ते ।
यदुच्यते संसृतिनाशकारि सर्वोत्तरं पावनपावनं च ॥ 39-2॥

तत्रास्त्ययोधातुमयो मनोज्ञः सालो महासारमयस्ततश्च ।
एवं च ताम्रादिमयाः किलाष्टादशातिचित्रा वरणा लसन्ति ॥ 39-3॥

तैरावृतं ते पदमद्वितीयं विभाति चिन्तामणिसद्म देवि ।

सन्त्यत्र सत्स्तम्भसहस्ररम्यशृङ्गारमुक्त्यादिकमण्डपाश्च ॥ 39-4॥

ब्रह्माण्डकोटीः सुखमावसन्त उपासकास्ते मनुजाः सुराश्च ।

दैत्याश्च सिद्धाश्च तथेतरे च यदन्ततो यान्ति पदं तदेतत् ॥ 39-5॥

त्वं मण्डपस्था बहुशक्तियुक्ता शृणोषि देवीकलगीतकानि ।

ज्ञानं विमुक्तिं च ददासि लोकरक्षामजस्रं कुरुषे च देवि ॥ 39-6॥

मञ्चोऽस्ति चिन्तामणिगेहतस्ते ब्रह्मा हरी रुद्र इहेश्वरश्च ।

खुरा भवन्त्यस्य सदाशिवस्तु विराजते सत्फलकत्वमाप्तः ॥ 39-7॥

तस्योपरि श्रीभुवनेश्वरि त्वं सर्वेशवामाङ्कतले निषण्णा ।

चतुर्भुजा भूषणभूषिताङ्गी निर्व्याजकारुण्यवती विभासि ॥ 39-8॥

प्रतिक्षणं कारयसि त्वमिच्छाज्ञानक्रियाशक्तिसमन्विताऽत्र ।

त्रिमूर्तिभिः शक्तिसहस्रयुक्ता ब्रह्माण्डसर्गस्थितिसंहृतीश्च ॥ 39-9॥

सा त्वं हि वाचां मनसोऽप्यगम्या विचित्ररूपाऽसि सदाऽप्यरूपा ।

पुरः सतां सन्निहिता कृपार्द्रा सदा मणिद्वीपनिवासिनी च ॥ 39-10॥

मातर्मदन्तःकरणे निषण्णा विद्यामयं मां कुरु बन्धमुक्तम् ।
बन्धं च मोक्षं च ददास्यसक्ता दासोऽस्मि ते देवि नमो नमस्ते ॥ 39-11॥

40 चत्वारिंशदशकः - प्रार्थना

आद्येति विद्येति च कथ्यते या या चोदयेद्बुद्धिमुपासकस्य ।
ध्यायामि तामेव सदाऽपि सर्वचैतन्यरूपां भवमोचनीं त्वाम् ॥ 40-1॥

प्रतिष्ठिताऽन्तःकरणेऽस्तु वाङ्मे वदामि सत्यं न वदाम्यसत्यम् ।
सत्योक्तिरेनं परिपातु मां मे श्रुतं च मा विस्मृतिमेतु मातः ॥ 40-2॥

तेजस्वि मेऽधीतमजस्रमस्तु मा मा परद्वेषमतिश्च देवि ।
करोमि वीर्याणि समं सुहृद्भिर्विद्या परा साऽवतु मां प्रमादात् ॥ 40-3॥

त्वं रक्ष मे प्राणशरीरकर्मज्ञानेन्द्रियान्तःकरणानि देवि ।
भवन्तु धर्मा मयि वैदिकास्ते निराकृतिर्माऽस्तु मिथः कृपार्द्रे ॥ 40-4॥

यच्छ्रूयते यत्खलु दृश्यते च तदस्तु भद्रं सकलं यजत्रे ।

त्वां संस्तुवन्नस्तसमस्तरोग आयुः शिवे देवहितं नयानि ॥ 40-5॥

अविघ्नमायात्विह विश्वतो मे ज्ञानं प्रसन्ना मम बुद्धिरस्तु ।
नावेव सिन्धुं दुरितं समस्तं त्वत्सेवयैवातितरामि देवि ॥ 40-6॥

उर्वारुकं बन्धनतो यथैव तथैव मुच्येय च कर्मपाशात् ।
त्वां त्र्यम्बकां कीर्तिमतीं यजेय सन्मार्गतो मां नय विश्वमातः ॥ 40-7॥

क्षीणायुषो मृत्युगतान् स्वशक्त्या दीर्घायुषो वीतभयान् करोषि ।
सङ्गच्छतः संवदतश्च सर्वान् परोपकारैकरतान् कुरुष्व ॥ 40-8॥

मर्त्यो ह्यहं बालिशबुद्धिरेव धर्मानभिज्ञोऽप्यपराधकृच्च ।
हा दुर्लभं मे कपिहस्तपुष्पसुमाल्यवच्छीर्णमिदं नृजन्म ॥ 40-9॥

यथा पथा वारि यथा च गौः स्वं वत्सं तथाऽऽधावतु मां मनस्ते ।
विश्वानि पापानि विनाश्य मे यद्भद्रं शिवे देहि तदार्तिहन्त्रि ॥ 40-10॥

बहूक्तिभिः किं विदितस्त्वयाऽहं पुत्रः शिशुस्ते न च वेद्मि किञ्चित् ।
आगच्छ पश्यानि मुखारविन्दं पदाम्बुजाभ्यां सततं नमस्ते ॥ 40-11॥

41 एकचत्वारिंशदशकः - प्रणामम्

देवि त्वदावास्यमिदं न किञ्चिद्वस्तु त्वदन्यद्बहुधेव भासि ।
देवासुरासृक्पनरादिरूपा विश्वात्मिके ते सततं नमोऽस्तु ॥ 41-1॥

न जन्म ते कर्म च देवि लोकक्षेमाय जन्मानि दधासि मातः ।
करोषि कर्माणि च निस्पृहा त्वं जगद्विधात्र्यै सततं नमस्ते ॥ 41-2॥

तत्त्वत्पदं यद्ध्रुवमारुरुक्षुः पुमान् व्रती निश्चलदेहचित्तः ।
करोति तीव्राणि तपांसि योगी तस्यै नमस्ते जगदम्बिकायै ॥ 41-3॥

त्वदाज्ञया वात्यनिलोऽनलश्च ज्वलत्युदेति द्युमणिः शशी च ।
निर्जैर्निजैः कर्मभिरेव सर्वे त्वां पूजयन्ते वरदे नमस्ते ॥ 41-4॥

भक्तिर्न वन्ध्या यत एव देवि रागादिरोगाभिभवाद्विमुक्ताः ।
मर्त्यादयस्त्वत्पदमाप्नुवन्ति तस्यै नमस्ते भुवनेशि मातः ॥ 41-5॥

सर्वात्मना यो भजते त्वदङ्घ्रिं माया तवामुष्य सुखं ददाति ।
दुःखं च सा त्वद्विमुखस्य देवि मायाधिनाथे सततं नमस्ते ॥ 41-6॥

दुःखं न दुःखं न सुखं सुखं च त्वद्विस्मृतिर्दुःखमसह्यभारम् ।
सुखं सदा त्वत्स्मरणं महेशि लोकाय शं देहि नमो नमस्ते ॥ 41-7॥

पतन्तु ते देवि कृपाकटाक्षाः सर्वत्र भद्राणि भवन्तु नित्यम् ।
सर्वोऽपि मृत्योरमृतत्वमेतु नश्यन्त्वभद्राणि शिवे नमस्ते ॥ 41-8॥

नमो नमस्तेऽखिलशक्तियुक्ते नमो नमस्ते जगतां विधात्रि ।
नमो नमस्ते करुणार्द्रचित्ते नमो नमस्ते सकलार्तिहन्त्रि ॥ 41-9॥

दुर्गे महालक्ष्मि नमो नमस्ते भद्रे महावाणि नमो नमस्ते ।
कल्याणि मातङ्गि रमे भवानि सर्वस्वरूपे सततं नमस्ते ॥ 41-10॥

यत् किञ्चिदज्ञातवतेह देवीनारायणीयं रचितं मयेदम् ।
अभद्रनाशाय सतां हिताय तव प्रसादाय च नित्यमस्तु ॥ 41-11॥

शुभम्